॥ श्रीः ॥

# माध्यन्दिनशाखाप्रकाशः ।

व्यवहारोपनामकश्रीजगन्नाथसूरि-
विरचितस्तेनैव संशोधितश्च ।

---

नृपालकुलमौलिमालायमानहथुआधिपतिश्री १०८
मन्महाराजश्रीकृष्णप्रतापसिंहदेवानिदेशा-
नुसारेण धर्मार्थं वितरणायैव

श्रीकाश्यां विक्टोरियानामके यन्त्रालये

विदपण्डितरामनाथशर्मद्वारा
मुद्रयित्वा प्रचारितः ।

---

सं० १९४५ आ० कृ० ८ भौमे ।

माध्यंदिनशाखाप्रकाशाख्यग्रंथस्य सूचनिकापत्रम् ॥

श्रीगणेशाय नमः ।

---

॥ श्रीमन्मंगलमूर्तये नमः ॥

आत्मानात्मविचारसाररसिकाः संसारवारांनिधेः पारं तूर्णमुपेष्यतो हितकराः स्वानन्दकन्दायिताः ॥ भ्रान्तध्वान्तनिवारणद्युमणयः कारुण्यपूर्णार्णवाः श्रीमत्सद्गुरुयाज्ञवल्क्यचरणाः कुर्वंतु नो मंगलं ॥१॥ श्रीगोविन्दहृदंबुजभ्रमददा शृंगारलीलास्पदा का वृन्दावननन्द मन्दिरवरानन्दैककन्दायितः ॥ कः प्रोतुं गगजेन्द्रगण्डयुगलाऽऽखण्डे प्रचण्डो महान् जीयान्मे प्रतिवाक्यवर्णघटितः श्रीकृष्णसिंहश्चिरम् ॥ २ ॥ कृपालुर्भूपालो जयतु किल दृब्धाभिधपुरे वदान्येशः श्रीशो द्विजवरकृते दानविधिपु ॥ शपः शत्रावूर्ध्वो विनिमयकथाद्रौ भरनतः शिवः शक्त्या युक्तो निजगतवशित्वेन हि जितः ॥ ३॥ उदयपुरनरेशो गुर्जरेशस्तथैव फणिपुरनरपालः किं च धारापुरेशः ॥ सुरपतिनगरेशो बुन्धधीशोपि दृष्टः पुनरपि रघुराजो रम्यरीमापुरेशः ॥ ४ ॥ एवं नृपाला बहुला विलोकिता स्तथापि माध्यन्दिनशाखिधुर्यः ॥ कृष्णप्रतापाभि-

धभूपवर्यो दृष्टः किलार्यो बुधपद्मसूर्यः ॥ ५ ॥ आ-
धायाग्निं काशिकायां नृपेन्द्रो विप्रद्वारा चाग्निशा-
लां चकार ॥ यस्यामिष्टो मंत्रयोगैर्द्विजेन्द्रा देवेन्द्रा-
दीन् सर्पिषा जुहृति स्म।६। कृतस्तेन वै काशिकायां
प्रयागो गयायां यथा वेधसाऽकारि पूर्वम् । सदस्यर्त्वि-
जाः सत्कृताः सद्द्विजेन्द्राः पुनस्तर्पिता ह्यन्नदानैर्धनै-
इच ।७॥ स्फुरत्कीर्तिमुक्तासमूहांस्तदीयैर्गुणैर्गुम्फितु
स्वर्गवामाः प्रवृत्ताः ॥ न चान्तं गुणानां यशोमौक्ति-
कानां न वा रन्ध्रलेशं हि दृष्ट्वा हसन्त्यः।८।श्रीकृष्णसिं-
हनृपतिः श्रितकल्पवल्ल्या कीर्त्या परं विजयतां ससु-
तः सदारः॥ यन्नाथमेत्य हथुवानगरं गरीयो द्योवैभ-
वं हसति शक्रविभुत्वलब्धम् ॥ ९ ॥ तेनैव भूपकुलमौ-
लिमणीश्वरेण माध्यन्दिनानपरिमेयमुदो विधातुम् ॥
संमुद्रितोऽयमभिमानवता प्रबन्धो जीयात्परेशकृपया
परया धरायाम् ॥ १० ॥ माध्यन्दिनवरशाखाप्रका-
शसंज्ञो मनोज्ञवाग्रूपः ॥ परया शंकरकृपया जीया-
दाचन्द्रतारकं भूम्याम् ॥ ११ ॥ आचन्द्रसूर्यं राजेन्द्र
श्रीमद्वंशोऽत्र तिष्ठतु ॥ श्रीमद्विश्वेश्वरोऽभीष्टपूर्तिं
कीर्तिं तनोतु व. ॥ १२ ॥

इह खलु भारतीये विपुलावलये पुरावेदशास्त्राद्यखिलगीर्वाणविद्यापारावारपारीणाःधरणिगीर्वाणधुरीणाः भूयांसोविद्वांसः सम्बभूवु. । तानेतान् बुधवरान् स्वसौजन्यजन्ययश्चन्द्रचन्द्रिकाधवलिताखिलवसुन्धराधराधिपतयः परेऽपिमहान्तः श्रीमन्तः यथोचितदानमानादिसत्कारकरणेन प्रीणयांचक्रुः ॥ अथ प्रकृतप्रबलकलिकालकेलिवशादापतितेन वेदादिविद्यापठनपाठनसम्प्रदायस्यातिकाश्येंन सलिलसेकादिसहकारिकारणविरहेणो द्यानभूमिमहीरुहाइव ताः वेदादिविद्याः अतिजीर्णतामावहन्ति ॥ अपि च वर्तमानकालिकाः केचन वेदविशारदास्तु निजशाखाभिमानिकतया वयमेव मुख्यत्वेन प्रबलाः अन्ये दुर्बलाः इत्यनवरतं गर्हयन्ति ॥ तत्रापि माध्यन्दिनीयाः प्रायशो दुर्बला इव विलसन्ति ॥ तद्बीजं तु इतरशाखीयाः प्रायः शतमध्ये पंचाविद्वांसः दुर्गताश्च ॥ तद्वैपरीत्येन माध्यन्दिनीयानां सत्वात् ॥ किं च शाकलानां पूर्वजस्य योगीश्वरयाज्ञवल्क्येन जनकमहाराजयजनसभायां विजयपूर्वकं शिरः पात करणात् काकोलूकिकायाइवपरमवैरस्य सत्वात् ॥ अपि च यौनसम्बन्धादिना तदितरेषां तैत्ति-

रीयप्रभृतीनां तदनुपायित्वेन विशेषसंघत्वात् ॥ संघे शक्तिः कलौ युगे इत्यादिवचनैस्तेषां प्राबल्यात् ॥ आहो स्वित् मातुलादिकन्यापरिणयदोषदूषितस्वेतरयौनसम्बन्धाभावेन पृथक्कृतया स्थितानां पूर्वोक्तसङ्घभयभीरूणां पुनः शुद्धानामपि माध्यन्दिनीयानां प्राशस्त्यबोधनाय ग्रन्थरूपो यत्नः कर्तव्यः ॥ ननु स्वप्राशस्त्यबोधनेन स्वेतरनिन्दाऽर्थतः फलतीति ब्राह्मणनिन्दायाः अनिष्टफलजनकत्वेन त्रिफलोयं विचार प्रयास इति चेन्न ॥ स्वपूर्वजयोगीश्वरयाज्ञवल्क्यमुनिवरनिन्दाश्रवणेन तूष्णीकानां गुरुनिन्दा श्रवणजन्यानिष्टफलस्य प्रोक्तनिन्दातोगरीयस्त्वेन लघीयस्या आधिक्यास्तस्या अकिंचित्करत्वात् ॥ आर्जवं हि कुटिलेषु न नीतिरिति॥ पदाहतं यदुत्थाय मूर्धानमधिरोहति ॥ स्वस्यादेवापमानेन देहिनस्तद्वरं रज इत्यादिवचसा वक्ष्यमाणग्रन्थकरणप्रयाससाफल्यात्॥ इत्थं च निरभिमानिकत्वजिज्ञासया पुनरभिमानिककतिपयपरशाखीयबोधनोपयोगितया च स्वशाखीयविदुषां अनेन महानुपयोगो भविष्यति इत्यवश्यं प्रकृतग्रन्थकरणसाफल्यं परमतिजागरूकतयैव सञ्जाघटीतीत्यवधेयमस्तु शिवम् ॥

श्रीमन्मंगलमूर्तये नमः ॥ स्फुरदरुणसुगंडं विघ्नवि-
च्छेदचंडं करबलयितशुंडं पालिताखंडपिंडं ॥ अग
णितगुणभांडं भक्तवांछाकरंडं शयधृतसृणिदंडं नौमि
त्वं वक्रतुंडं ॥१॥ मालिनीवृत्तम् ॥ स्वभक्तवरकामदा दि
तिजसैन्ययुद्धोन्मदा कवींद्रजनसिद्धिदा विधिहृदंबुजाता
रुपदा ॥ निशुम्भमुखमृत्युदा निजपदाश्रितज्ञानदा
मुखेविजयतां सदा रसननर्तकी शारदा ॥ २ ॥ पृथ्वि
वृत्तम् ॥ विश्वेशंप्रणिपत्यढुंढिगिरिजागंगान्वितं भै
रवंदुर्गासंकटनाशिनौं चपितरौश्रीसद्गुरोः पादुके ॥
श्रीयोगीश्वरयाज्ञवल्क्यचरणौ भक्त्या नुरागाद्गुरौ कुर्वे
शुक्लयजुस्तरोर्नवममुं शाखाविचारं परं ॥ ३ ॥ शा
र्दुलविक्रीडितं वृत्तं ॥ श्रीमान्वेदपदोदितः सुरतरुर्यो
नेकशाखांकितोधर्मार्था न्वितकाममुक्तिफलदस्ताराङ्कुरः
सज्जनैः ॥ यस्मिन् ब्रह्मविचारसाररसिकास्तिष्ठंति
संतो द्विजाः सोऽयंसंप्रतिवर्णपर्णघटितो वर्वर्ति सर्वो-
परि ॥४॥ शार्दुलविक्रीडितं ॥ नमामियोगीश्वरयाज्ञव
ल्क्यपादारविंदं नतशिष्यवृन्देययोर विद्याप्रतिघातकेन
क्षणार्धसंगेन कृतार्थतास्यात् ॥ ५ ॥ उपजातिवृत्त
योगीश्वरं याज्ञवल्क्यं कण्वमध्यंदिनांकितं । कात्या

पनादिसहितं वं देस्वाभीष्टसिद्धये ॥ ६ ॥ निर्जित्य वादसमये मुनीनन्यानुपस्थितान् ॥ गावो येनार्जिता स्तस्मै याज्ञवल्क्याय मे नतिः ॥ ७॥ यद्यप्यहं ब्रह्म सत्यं जगन्मिथ्येति जानताम् ॥ अयोग्यमेव चास्माकं वेदतत्त्वविचारणम् ॥८॥ तथापि योग्यमेव स्याद्यद्वैहा रावलं बनात् ॥ शास्त्रीयेनैव मानेन वच्म्यहं गुर्वनुग्रहात् ॥९॥ जगन्नाथाभिधेयस्तु व्यवहारेत्युपाभिधः ॥ माध्यन्दिनीयशाखायाः प्रकाशं सन्तनोम्यहम् ॥१०॥

अथ सुकृतिसंघाताञ्चतभारतभुवि अनादिकालसंरूढ निगमकल्पतरुवरप्रवरमाध्यंदिनीयशाखायाः स्वयम्प्रकाशमानतयाकिमधिकतया प्रकाश्यत इति चेदुच्यते ॥ यथा स्वयम्प्रकाशस्यापि सहस्रांशोरोपाधिकांधत्वविशिष्टदृष्टेः प्रकाशकोपायस्तद्वदयं विचारप्रचारः ॥ यथा वा स्वयं प्रकाशस्यापि ब्रह्मणो वोधनाय तद्विषयाज्ञाननिवृत्त्यर्थो वेदान्तविचारस्तद्वत् ॥ वस्तुतस्तु वितरुणतरणिविषयता किरणाकीर्णान्तःकरणानां धरणिगीर्वाणधुरीणानां स्वशिष्टेतरशिष्टावशिष्टवरिष्ठानां विरूपष्टं विशिष्टबोधकत्वेप्यष्टत्वेन तच्छेष्टेऽपि नितान्ताज्ञानध्वान्ताक्रान्तस्वान्तभ्रान्तानां भ्रान्तानां तु सर्वदा

कुचोद्यैकचोद्योद्यमवतां खण्डनमण्डनाद्यनेकवैतंडिको द्दंडपांडित्यप्रचंडानां अनल्पजल्पकल्पनाजल्पाकानां स्वशाखाभिमानिकतयाऽन्यशाखानिन्दकानां अत एव शिष्टेतरत्वविशिष्टानां तदज्ञाननिवृत्तये विरुद्धकोटिकविप्रतिपत्त्यादिजन्यसंशयप्रतिबन्धकनिश्चयसम्पत्तये च मुख्योऽयं विचारोपक्रमः ॥ ननु सर्वोऽपि द्विजवरः वेदप्रामाण्यबोधवत्तयोत्कृष्टशाखाविशिष्टः शिष्टोऽहमित्याभिमानिकतयाचान्यशाखाविशिष्टशिष्टानुत्कृष्टत्वप्रयोज्यां जुगुप्सां स्वभावतः करोतीति प्रसिद्धम् ॥ तथा च ज्ञाप्तज्ञापकत्वेन निष्प्रयोजनकतया विफलोऽयं विचारप्रयास इति चेन्न ॥ तदज्ञानमूलाभिमानिकतयाऽन्यशिष्टापमानकरणस्यानिष्टफलकत्वं स्पष्टमागमादिषु ॥ तथा च श्रुतिः यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवताः प्रीणातीति नतावदेतावदेव किं तु बृहदारण्यं ब्राह्मणमपि इदमेवा वेदयति ॥ तत्र याज्ञवल्क्यकांडीयपंचमाऽध्यायमध्यगतानुगत श्रुतिरूपाऽख्यायिकासंक्षेपेण प्रकृतोपयुक्ता यथा तथोच्यते ॥ श्रुतिः ॥ ओं जनको ह वैदेहो बहु

दक्षिणेन यज्ञेनेजे तत्र ह कुरु पांचालानां ब्राह्मणा अभिसमेता बभूवुस्तस्यह वैदेहस्य विजिज्ञासाबभूवकः स्विदेषां ब्राह्मणानामनूचानतमइतिसहगवाथंसहस्रमव रुरोधदशदशपादा एकैकस्याःशृंगयोराबद्धाबभूवुः॥१॥ तान्होवाच ब्राह्मणा भगवन्तोयो वो ब्रह्मिष्ठः स एता गाउदजतामिति तेह ब्राह्मणानदधृषुरथयाज्ञवल्क्यः स्वमेव ब्रह्मचारिणमुवाचैताः सौम्योदजसामश्रवा इ- तिताहोदाचकार तेह ब्राह्मणाश्चुक्रुधुः कथन्नोब्रह्मि ष्ठो ब्रवीतेत्यथ हजनकस्य वैदेहस्यहोताश्वलो बभूव सहैनं प्रपच्छत्वं नुखलु नोयाज्ञवल्क्यब्रह्मिष्ठो सी इ- ति सहोवाच नमो वयं ब्रह्मिष्ठाय कुर्मो गोकामा एव वयथंस्म इति तथंह तत एव प्रष्टुं दध्रे होताश्वलः ॥ २ ॥ शंकरभगवत्पादीयम्भाष्यम् ॥ जनको नाम हकिलसंघाट् राजा बभूव विदेहानां तत्र भवो वैदेहः स च बहुदक्षिणेन यज्ञेन शाखान्तरप्रसिद्धो वा बहु दक्षिणो नाम यज्ञः । अश्वमेधो वा दक्षिणाबाहुल्यात् बहुदक्षिण इहोच्यते॥ तेन ईजे अयजत् ॥ तत्र त स्मिन् यज्ञे निमन्त्रितादर्शनकामा वा कुरूणां देशानां पांचालानां च ब्राह्मणास्तेषु विदुषां बाहुल्यं प्रसिद्धम्॥

अभिसमेताः अभिसंगताः बभूवुः ॥ तत्र महान्तं वि
द्वत्समुदायं दृष्ट्वा तस्य ह किल जनकस्य कोऽनुखल्व
त्र ब्रह्मिष्ठ इति विशेषेण ज्ञातुमिच्छा बभूव ॥ कथं
कः स्वित्कोऽनुखल्वेषां ब्राह्मणानामनूचानतमः सर्वइमे
अनूचाना एव कः स्विदेषां अतिशयेनानूचान इति
सहानूचानविषयोत्पन्नजिज्ञासः सन् तद्विज्ञानोपायार्थं
गवां सहस्रं प्रथमवयसामवरोध गोष्ठे अवरोधं का
रयामास ॥ किं विशिष्टास्ता गावोऽवरुद्धा इत्युच्यते ॥
पलचतुर्भागः पादः सुवर्णस्य दशदशपादाः एकैकस्याः
गोः शृङ्गयोराबद्धा बभूवुः ॥ पञ्चपञ्च पादाः एकैक
स्मिन् शृङ्गे ॥ गाः एवमवरुध्य ब्राह्मणांस्तान्ह उवाच ॥
हे ब्राह्मणाः भगवन्त इत्यामन्त्र्य यो वो युष्माकं ब्रह्मि
ष्ठः सर्वे यूयं ब्राह्मणाः अतिशयेन युष्माकंब्रह्मिष्ठो यः
स एता गा उदजतां उत्कालयतु स्वगृहं प्रति ॥ तेह
ब्राह्मणा न दधृषुः न प्रगल्भाः संवृत्ताः अप्रगल्भभू
तेषु ब्राह्मणेषु अथ ह याज्ञवल्क्यः स्वमात्मीयमेव ब्र
ह्मचारिणमन्ते वासिनमुवाच ॥ एता गाः हे सौम्य उ
दज उद्गमयास्मद्गृहान् प्रति ॥ हे सामश्रवाः साम
विधिं शृणोति ॥ अतोऽर्थाच्चतुर्वेदो याज्ञवल्क्यस्ताः

गाः ह उदाचकार उत्कालितवान् आचार्यगृहं ॥ इति ॥ याज्ञवल्क्येनब्रह्मिष्ठपण स्वीकरणेनात्मनोब्रह्मिष्ठताप्र तिज्ञातेति॥ते ह चुक्रुधुः क्रोधवन्तः ब्राह्मणास्तेषांक्रोधा भिप्रायमाचष्टे॥कथंनो ऽस्माकमेकैकंप्रधानानां,ब्रह्मिष्ठोऽ स्मीति ब्रवीतेति ॥ अथैवं क्रुद्धेषु जनकस्य यजमानस्य होता ऋत्विक् अश्वलो नाम बभूव आसीत् स एनं याज्ञवल्क्यं ब्रह्मिष्ठाभिमानिनात्राजाश्रयबलाच्च धृष्टो याज्ञवल्क्यं पप्रच्छ पृष्टवान् कथं याज्ञवल्क्येति होवाच त्वं नु खलु नो याज्ञवल्क्यब्राह्मिष्ठोसीइति प्लुतिर्भर्त्सना र्था ॥ सहोवाच याज्ञवल्क्यः नमस्कुर्मो वयं ब्रह्मिष्ठा य इदानीं तु गोकामाः स्मो वयमिति॥ तंब्रह्मिष्ठप्रतिज्ञं सन्तं तत एव ब्रह्मिष्ठपणस्वीकरणात् प्रष्टुं दध्रे धृत वान् मनो होताश्वलः ॥ प्रथमं याज्ञवल्क्येति सम्बो ध्य उवाच श्रुतिः ॥ यदिदं सर्वं मृत्युनाप्तमित्यादिभिः कर्मविषयकप्रश्नैः ॥ ततो याज्ञवल्क्येन सम्यक् प्रत्यु त्तरितः सन् नायमस्मद्गोचर इत्युपरराम ॥ श्रुतिः अथ हैनं जारत्कारव आर्तभागः पप्रच्छ याज्ञवल्क्येति होवाच कतिग्रहाः कत्यति ग्रहाः इत्यादिभिः प्रश्नैः सोऽपि प्रत्युत्तरितः सन् पूर्ववदेवोपरतः॥ श्रुतिः अथैनं

भुज्युर्लाह्यायिनिः पप्रच्छ याज्ञवल्क्येति होवाचमद्रेषु
चरका इत्यादिभिः प्रश्नैः सोऽप्युत्तरैरुपरतः ॥ श्रुतिः
अथैनमुषस्तश्चाक्रायणः पप्रछ याज्ञवल्क्येतिहोवाच ॥
यत्साक्षादपरोक्षाद्ब्रह्मेत्यादिभिर्ब्रह्मविषयकप्रश्नैः सो
ऽपि मुनिवरोदीरितोत्तरैः कृतार्थः समभूत् ॥ श्रुतिः
अथ हैनं कहोलकः कौषीतकेयः पप्रच्छयाज्ञवल्क्येति
होवाच सोऽप्युत्तरैरित एवोपरराम ॥ श्रुतिः अथैनं गा
र्गीवाचक्नवी पप्रच्छ याज्ञवल्क्येति होवाच ॥ सापि प्र
तिप्रश्नोत्तरैः प्रत्युत्तरिता सती पुनः शिरः पातभीत्यै
वोपरता ॥ श्रुतिः अथ हैनमुद्दालक आरुणिः पप्रछेत्या
द्यारभ्य नान्योतोऽस्ति विज्ञातैषत आत्मान्तर्याम्यमृतो
इतोऽन्यदार्तंततोहोद्दालक आरुणिरुपररामेति ॥ ए-
तदुत्तरं अष्टम ब्राह्मणे गार्गीवाचक्नवीयाज्ञवल्क्यस
म्वादे श्रुतिः अथ ह वाचक्नव्युवाच ब्राह्मणा भगवन्तो
हन्ताहमिमौ द्वौ प्रश्नौ पृच्छामितौ चेन्मे वक्ष्यति न वै
जातु युष्माकमिमं कश्चिद्ब्रह्मोद्यं जेचेति पृच्छगार्गीति
॥ १ ॥ सहोवाचाहं वै त्वा याज्ञवल्क्य यथा काश्यो
वा वैदेहो वोग्रपुत्र उज्यं धनुरधिज्यं कृत्वा द्वौ बाणव
न्तो सपत्नातिव्याधिनो हस्ते कृत्वोपोत्तिष्ठेदेवमेवाहं

त्वां द्वाभ्यां प्रश्नाभ्यामुपोदस्तां तौ मे ब्रूहीति पृच्छगा
र्गीति ॥ २ ॥ सहोवाच यदूर्ध्वं याज्ञवल्क्यदिवो यद
वाक् पृथिव्या यदन्तरा द्यावापृथिवी इमे ॥ यद्भूतं च
भवच्च भविष्यच्चेत्याचक्षते कस्मिंस्तदोतं च प्रोतं
चेति ॥ ३ ॥ सहोवाच यदूर्ध्वं गार्गीदिवो यदर्वाक् पृ
थिव्या यदन्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च
भविष्यच्चेत्याचक्षत आकाशे तदोतं च प्रोतं चेति
॥ ४ ॥ साहोवाच नमस्तेऽस्तु याज्ञवल्क्य यो म एतं
व्यवोचोपरस्मै धारयस्वेति पृच्छगार्गीति ॥ ५ ॥ साहो
वाच यदूर्ध्वं याज्ञवल्क्यदिवो यदर्वाक् पृथिव्या यद
न्तरा द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चे
त्याचक्षते कस्मिंस्तदोतं च प्रोतं चेति ॥ ६ ॥ स
होवाच यदूर्ध्वं गार्गीदिवो यदवाक् पृथिव्यायदन्तरा
द्यावापृथिवी इमे यद्भूतं च भवच्च भविष्यच्चेत्याच
क्षत आकाश एव तदोतं च प्रोतं चेति कस्मिन् खु
ल्वाकाश ओतश्च प्रोतश्चेति ॥ ७ ॥ सहोवाचैतद्वैतद
क्षरं ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलो
हितमस्नेहमछायमतमो वाय्वनाकाशमसंगमरसमगन्ध
मचक्षुष्कमश्रोत्रमवागमनोतेजस्कमप्राणममुखममात्र

मनन्तरमबाह्यं न तदश्नाति किं च न न तदश्नाति
कश्चन ॥ ८ ॥ एतस्य वा अक्षरस्य प्रशासने गार्गि
सूर्याचन्द्रमसौ विधृतौ तिष्ठत एतस्य वा अक्षरस्य
प्रशासने गार्गि द्यावापृथिव्यौ विधृतौ तिष्ठत एतस्य
वा अक्षरस्य प्रशासने गार्गि निमेषामुहूर्ता अहो रा
त्राण्यर्धमासा मासा ऋतवः सम्वत्सरा इति विधृता
स्तिष्ठन्त्येतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽ
न्या नद्यः स्यन्दन्ते श्वेतेभ्यः पर्वतेभ्यः प्रतीच्योऽन्या
यां यां च दिशमन्वेतस्य वा अक्षरस्य प्रशासने गार्गि
ददतो मनुष्या प्रशंसन्ति यजमानं देवा दर्वी पित
रोऽन्वायत्ताः ॥ ९ ॥ यो वा एतदक्षरं गार्ग्यविदित्वा
अस्मिन् लोके जुहोति यजते तपस्तप्यते बहूनि वर्ष
सहस्राण्यन्तवदेवास्य तद्भवति यो वा एतदक्षरं गार्ग्य
विदित्वास्माल्लोकात् प्रैति स ब्राह्मणः ॥ १० ॥ तद्वा
एतदक्षरं गार्ग्यदृष्टं द्रष्टृश्रुतंश्रोतृमतं मंतृविज्ञातं वि
ज्ञातृनान्यदतोऽस्ति द्रष्टृनान्यदतोऽस्ति श्रोतृनान्यद
तोऽस्ति विज्ञातृ तस्मिन्नुखल्वक्षरे गार्ग्याकाश ओतश्च
प्रोतश्चेति ॥ ११ ॥ साहोवाच ब्राह्मणास्तदेव बहुम
न्यध्वं यदस्मान्नमस्कारेण मुच्येध्वं न वै जातु युष्मा

कमिमं कश्चिद्ब्रह्मोद्यं जेतेति ततो ह वा चक्रव्युपर
राम ॥ १२ ॥ एतस्य गार्गी ब्राह्मणस्यातिरोहितार्थक
तया भाष्यं न लिख्यते ॥ एवं गार्गीबोधिताखिलमु
निवर्गेष्वखर्वगर्वः शाकल्याभिधेयो मुनिवरः समत्सर
ः सन् अनल्पजल्पायसमुपस्थितः॥ श्रुतिः अथ हैनं
विदग्धः शाकल्यः पप्रच्छ कति देवाः इत्यादिभिः प्रश्नैः
पुनरतिवादे प्रवृत्तः सन् उवाच कस्मिन्नुदानः प्रति
ष्ठित इत्यंतमुक्त्वा याज्ञवल्क्येन समानइत्यादिभिः
प्रत्युत्तरितोऽपि यदा न मेने तदा याज्ञवल्क्य
उवाच ॥ श्रुतिः स एष नेति नेत्यात्मा ग्राह्यो
न हि गृह्यते शीर्यो न हि शीर्यते संगोन हि
सज्यते सितो न व्यथते नरिष्यति ॥ एतान्यष्टावाय
तनान्यष्टौ लोका अष्टौ देवा अष्टौ पुरुषाः सयस्तान्
पुरुषान् निरुह्य प्रत्युह्यात्याक्रमत् तौपनिषदं पुरुषं
पृच्छामि तं चेन्मे न वक्षसि मूर्धा ते व्यपतिष्यतीति तंह
नमेने शाकल्यस्तस्य मूर्धाविपपात ॥ अपिहस्यपरिमो
षणोऽस्थीन्युपजह्रुरन्यन्मन्यमानाः ॥ अथ होवाच
ब्राह्मणा भगवंतो योवः कामयते समापृच्छतुसर्वे वा
मा पृच्छत योवः कामयतेतंवः पृच्छामिसर्वान्वावः

पृच्छामीति तेह ब्राह्मणानदधृषुः ॥ भाष्यं ॥ स एष स यो नेति नेतीति निर्दिष्टो मधुकांडे स एषः सोऽयमात्मा अग्राह्यो न हि गृह्यः कथं यस्मात् सर्वकार्यधर्मातीतस्तस्मादगृह्यः कुतोयस्मान्न हि गृह्यते यद्धिकरणगोचरं व्याकृतं वस्तु तद्ग्रहणगोचरं इदंतु तद्विपरीतमात्मतत्वं ॥ तथाऽशीर्यो यद्धिमूर्तं संहतं शरीरादिव च्छीर्यते अयंतु तद्विपरीतो अतो न हि शीर्यते ॥ तथाऽसंगो मूर्तो मूर्तान्तरेण संबध्यमानः सज्यते अयं तु तद्विपरीतो न हि सज्यते ॥ तथाऽसितः अबद्धो यद्धि मूर्तं तद्बध्यते अयं तु तद्विपरीतत्वान्नसितोऽबद्धत्वान्न व्यथते अतो नरिष्यति ॥ ग्रहणविशरणसंगबंधकार्यधर्मरहितत्वान्नरिष्यति नहिं सामापद्यते न विनश्यतीत्यर्थः ॥ एतानि यान्युक्तान्यष्टावायतनानि पृथिव्येव यस्यायतनमित्येवमादीनि अष्टौ लोका अग्निलोकादयः अष्टौ पुरुषाः शारीरः पुरुष इत्यादयः स यःकश्चित् तान् पुरुषान् शारीरप्रभृतीन् निरुह्य निश्चयेन उह्य गमयित्वा अष्ट चतुष्कभेदेन लोकस्थितिमुपपाद्यपुनः प्राचीदिग्गादिद्वारेण प्रत्युह्यस्वात्मनिहृदये अत्याक्रामत् अतिक्रांतवान् उपाधिधर्मं हृदया

धात्मत्वं स्वेनैवात्मना व्यवस्थितो यःसः औपनिषत्पु रुषः अशनायादिवर्जितः उपनिषत्स्वेव,विज्ञेयो नाऽन्यत्र प्रमाणगम्यस्तं त्वा त्वां विद्याभिमानिनं पुरुषं पृच्छामि तं चेन्मे नवक्षासि विस्पष्टं न कथयिष्यसि मूर्द्धा ते व्यपतिष्यतीत्याह याज्ञवल्क्यः ॥ तमौपनिषदं पुरुषं शाकल्यो न विज्ञातवान् किलेति निश्चयेन तस्य मूर्द्धा विपपात निपतितः ॥ किं च हास्य परिमोषिणा तस्कराःअस्थीन्यपि संस्कारार्थं शिष्यैर्नीयमनानि गृहान् उपाजन्हुः अपहृतवंतः किंनिमित्तमन्यद्धनं नीयमानंमन्यमाना इति ॥ तथा च शाकल्यस्य ब्रह्मिष्ठापमानेन अकालविदेशमरणेन च तस्याऽस्थीन्यपि गृह्याग्निना असंस्कृतान्येवेसंवृत्तानि॥ तत्र ब्रह्मविदा ब्राह्मणान् जिलपर्णीभूतं गोधनं हर्तव्यमितिन्यायं मत्वा आह॥ अथानंतर तूर्ष्णी भूतेषु ब्राह्मणेषु ह उवाच हे ब्राह्मणाः भगवंत इत्येवं संबोध्य यो वो युष्माकं मध्ये कामयते इच्छति याज्ञवल्क्यं पृच्छामीति स पूर्वमागत्य पृच्छतु सर्वे त्वां मा पृच्छत ॥ सर्वे वा यूयं मामांपृच्छत यो वः कामयते याज्ञवल्क्यो मां पृच्छतीति ॥ तं वः पृच्छामि सर्वान्

वा वो युष्मानहं पृछामी ते ह ब्राह्मणाः न दधृपुः ते ब्राह्मणाः एवमुक्ता अपिन प्रगल्भाः संवृत्ताः किंचिदपि प्रत्युत्तरं वक्तुं इति भाष्यम् ॥ एवं च महदवज्ञायः शाकल्यवद्दलवदनिष्टफलजनकतया ब्रह्मनिष्ठाः याज्ञवल्क्यादयो महांतः संतः सर्वदा वंद्या एव न निंद्या इति सिद्धम्॥ ननु जनकमहाराजाध्वरीयतत्तदार्त्विज्यकर्मण्यधिकृतानां स्वस्वशाखाध्ययनशालिनांब्रह्मिष्ठानामप्याश्वलादिशिष्टानां महतामपमानेनगणादगृहीतावधेर्गणस्यतुन किंच नेत्यादिवचनवत् प्रत्युतनिजशाखाभिमानवतो भवत एव महापातकपर्वतपातो भविष्यतीति भिया प्रकृतशाखाविचारारम्भणमनुचितमिति चेन्न॥ निरुक्ताऽख्यायिकायास्तादृशतात्पर्याभावात् ॥ तथाहि विजिगीषोः कथामिषेणप्रवृत्तायां ब्रह्मविद्यास्तुतितात्पर्यकायामाख्यायिकायां यागदीक्षादीक्षितस्याप्यनेकाचार्यशिक्षितस्यात्यन्तं मुमुक्षावतो जनकमहाराजवर्यस्यानेकद्विजसमाजे ब्रह्मविद्याप्राप्तितात्पर्यतया तद्विशिष्टशिष्टविषयकैव जिज्ञासा समभूत् ॥ अतएव तदभिनये अनूचानतम इत्युक्तिः सङ्गच्छते ॥ ननु ब्राह्मणायमानकरणाय ॥ अन्यथा ब्राह्मिष्टपणकरणलक्षणे भग

वन्त इति द्विजसम्बुद्धिर्वैयर्थ्यमापद्येत ॥ एतेन ब्राह्म णापमानाय महाराजपणकरणमिति वदन्तोऽप्यपास्ताः तस्मादब्रह्मिष्ठपरीक्षणोपायलक्षणं महाराजपणकरणमिति सिद्धम् ॥ तथा च तादृशपणस्वीकरणासमर्थेषु मुनिवरेषु सत्स्वेव याज्ञवल्क्यमुनिर्यैस्तं ब्रह्मिष्ठपणं स्वयमुरीचकार ॥ अथ सर्वे मुनिवर्याश्चुक्रुधुः ॥ तं च पणीभूतं गोगणं रुरुधुः ॥ पुनः कतिपयमुनिवरा मत्सराः समत्सराः सन्तः प्रचुरतरापकारगिरं वदन्तो विवदन्तोऽपि परपराभवमभीप्सवस्तं मुनिवरमावव्रुः ॥ पूर्वं तेष्वाश्वल एव उवाच ॥ कथमस्मासु ब्रह्मिष्ठेषु सत्सु भवतैव ब्रह्मिष्ठपणस्वीकरणं कृतमिति ॥ तदा नमस्कुर्मो वयं ब्रह्मिष्ठायेति उत्तरेणैव निरभिमानित्वरूपं ब्रह्मिष्ठलिङ्गं व्यक्तीकृतं सदपि पुनरवोचत् नोचेत् गोसहस्रं मुच्यतामिति ॥ किं तु गोकामा वयमित्यादिभिः प्रयुक्तोऽपि सः यदा न बुबोध ॥ तदा कर्ममयानन्यान् प्रश्नान् चकार ॥ याज्ञवल्क्येन तदुत्तरैः प्रत्युत्तरितः सन् पूर्वं क्रोधाद्यभिभूतोऽपि मुनिवरादपि निजपराभवमेवमनुभूय स्वयमेवोपरतः ॥ एवमेवगार्गीपर्यन्तेषु मुनिवरेषु उपरतेषु सत्सु स्त्रीवर्गाधिकृतनिसर्ग

दुर्बोधापि गार्गीमुनिवरेणोदीरितद्वितीयप्रश्नद्वितीयोत्त
रेरद्वितीयवस्तुनिश्चयं गमिता सति स्वयमेव ब्रह्मविद्व
रिष्टयाज्ञवल्क्यमहर्षिपादौ यदा ववन्दे ॥ तदैव सा
गार्गी मुनिवर्गानभिमुखीकृत्य प्रार्थयामास ॥ सर्वैरगर्व
तया मात्सर्यमुत्सार्य ब्रह्मविदग्रसरमुनिवरचरणाः प्र-
णमनीया एवेति ॥ एवं च गार्गी ब्राह्मणेन दृश्यमात्र
निराकरणद्वारा दृक् स्वरूपभूतस्वात्मविषयकानुभवप
र्यवसानज्ञापनेन आत्माद्वैतब्रह्मात्मैक्याऽपरोक्षानुभवज
नककौशल्यं याज्ञवल्क्यस्याविष्कृतमित्यवधेयम्॥ तदा
तत्र सर्वे न केवलं त्रपाकलत्रा एवाभवन् किन्तु अ
चित्रा अपि चित्रिता इव संवृत्ताः इति चित्रं समभूत्॥
अपि चाऽतिवादरतस्य शाकल्यस्य शिरःपातोत्तरं सर्वे
ऽप्यधिकतरां भीतिमापेदिरे ॥ तथाच ब्राह्मणापमानक
रणतात्पर्यकानेयमाख्यायिका येन तदपमानकरणापरा
राधो मुनिवरं सम्बध्येत ॥ किं च याज्ञवल्क्यस्यवैशं
पायनाख्यपूर्वगुरोरिवब्रह्महत्यासम्बन्धगन्धोऽपि ॥ आ
त्महननाय विषभक्षकपुरुषवत् ॥ दिपवत्तंगवद्वा ॥ किं
मुततदनुयायिनां माध्यन्दिनीयशाखाध्यायिनामस्माकं
तत्पातकपोत्कपातोऽपि ॥ यथा कश्चित् तपस्विपुत्र

केन चिदसतात्वमसतीपुत्र इत्युक्तः सन् निजजननीज नकयोस्तत्वस्वरूप विचारेणात्मीयजनक गतसतीपतित्व निश्चयपूर्वकं निजजनन्यां सतीत्वं निश्चिनोति ॥ तद्वन् ममापि योगीश्वरयाज्ञवल्क्यविषयकब्रह्मविद्वरिष्ठनिश्च यपूर्वकोनिजशाखामुख्यत्वनिश्चयविचारो अत्यावश्यक इति न किमप्यनुपपन्नम् ॥ तस्य बृहदारण्यश्रुतिस म्मतत्वात् ॥ एवं चोक्तपणकरणोपायेनजनकमहाराज स्य याज्ञवल्क्यमहर्षिवर्ये एवाऽखिलादिशिष्टापेक्षया ब्र ह्मविद्वरिष्ठनिश्चयसम्पत्त्या अग्निमषष्ठाध्यायमध्यगत कूर्चब्राह्मणे श्रुतिः ॥ जनकोह वैदेहः कूर्चादुपावसर्प न्नुवाच नमस्तेऽस्तु याज्ञवल्क्यानुमाशाधीति इत्याद्या रभ्य अभयं वैजनकप्राप्तोसीति होवाच याज्ञवल्क्यः इत्याद्युपनिपद्भिः औपनिषदपुरुषबोधकऋष्युपदिष्टब्रह्म विद्याप्राप्त्या च यथा कृतार्थता समभूत् ॥ तद्वन्ममापि ब्रह्मविदग्रसरयाज्ञवल्क्यमुनिवर चरणस्मरणमात्रेणैव वक्ष्यमाणनिबन्धे ब्रह्मविद्यासमानाधिकरणमाध्यन्दिनी यशाखायाःनिरुक्तानिरुक्तश्रुतिसंहितातात्पर्याधीनतात्पर्य विषयं निरतिशयमुख्यत्वमनायासेनैव व्यक्तं यथा स्या त्तथा कृतार्थतानियमेन भविष्यतीति सिद्धम् ॥ एवं

चोक्ततात्पर्यकयाऽप्याख्यायिकया वाय्यादिविप्रपत्तिसम्प
त्तिकालीनस्वविरोधिविजयवत्तसम्बन्धबोधनेन; एकस-
म्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिनियमेन चस्मृत
स्य उपेक्षानर्हत्वरूपप्रसङ्गसङ्गतेः सुलभतयाऽलाभेनना
सङ्गतं प्रयुञ्जीतेत्यादिवचनजालानुकूलताऽपि सफल
तयैव विलसति ॥ किं चात्रमाध्यन्दिनशाखाविशिष्टशि
ष्टा एवाधिकारिणः माध्यन्दिनशाखाविशिष्टशुक्लयजु
र्वेदमुख्यत्वं विषयः प्रतिपाद्यप्रतिपादकभावः सम्बन्धः
भ्रान्ताज्ञाननिवृत्तिः प्रयोजनमिति प्रेक्षावत्प्रवृत्तिनि-
मित्तकानुबन्धचतुष्टयसम्पत्त्या प्राक्तननिबन्धकारानुम
तोऽयं प्रबन्धः॥ अपि चोपनिषदुद्घोषितौपनिषदपुरुष
प्रतिपादकेनापि प्रकृतविचारेण ब्रह्मविद्याया इवमोक्ष
जनकत्वमप्याविष्क्रीयते ॥ आहो स्वित् दाहकार्यस्थले
उत्तेजकस्य प्रतिबन्धकसमवधानेऽपि दाहजनकत्ववत्
प्रकृतशाखावन्मुख्यत्वसाधकप्रतिबन्धक प्रतिबन्धकत्वा
र्थसमर्थनेनाप्युक्तोपलब्धार्थासार्थकतामगात् ॥ तथा च
एतावता प्रबन्धेन माध्यन्दिनीयशाखायाः ब्रह्मविद्या
सा-नाधिकरण्यरूपा संगतिरुक्ताऽऽख्यायिकया निरुक्तेति
फलितम् ॥ ननु वेदत्वावच्छिन्नैकदेशभूतायाः माध्य-

न्दिनीयशाखाया एव स्वयं प्रकाशतया इतरशाखाना मप्रकाशकत्वस्य आर्थिकत्वेन वेदत्वावच्छिन्नस्य स्वयं प्रकाशकत्वं भज्येत इति चेन्न ॥ प्रकृतशाखाविचारस्य अन्यतात्पर्यकत्वात् ॥ तथाहि नहि स्वभिन्नशाखाप्रका शाभावरूपं तात्पर्यमस्मदीयम् ॥ किन्तु यथोक्तशाखा नां यथायथं प्रकाशकत्वेऽपि प्रकृतशाखायाः बिजातीयप्रकाशकत्वस्य वक्ष्यमाणतया वर्तमानकालिकनिजशा खाभिमानिकतया इतरशाखाऽपकर्षत्ववादिनां मते प्र- स्युतवेदत्वावच्छिन्नस्य स्वयं प्रकाशकत्वभङ्गप्रसङ्गःस्या त् ॥ तन्निरसनतात्पर्यफलक एवायं प्रयासः वक्ष्यमाण द्वितीयतृतीयलक्षणप्रमाणांशाभ्यां सम्पाद्यते इत्यवधे- यम् ॥ श्रीसद्गुरुरामशास्त्रिचरणरजोविरजीभूत जय शमात्मजजगन्नाथसूरिविरचितो माध्यन्दिनीयशाखाप्र काशस्य प्रथमांशः समाप्तिमगात् ॥

ओंकाराकारशुण्डाग्रं समस्ताम्नायरूपिणम् ॥ वे- दान्तवेद्यं सद्दंद्यं नौमि सिद्धिविनायकम् ॥ १ ॥ द्विती योऽयं लक्षणाख्यो वस्तुसिद्धिविधायकः ॥ माध्यन्दिनी यशाखायाः प्रकाशांशो निरूप्यते ॥ २ ॥ अथ लक्षण प्रमाणाभ्यामेव वस्तुसिद्धिरिति न्यायात् ॥ प्रमाधीना

मेय सिद्धिर्मानसिद्धिश्च लक्षणादित्यादिवचनाच्च प्रकृ
तस्य सिषाधयिषितस्य शुक्लयजुर्वेदस्यैव लिलक्षयि-
षिततया तस्यैव लक्षणे वक्तव्ये विशेषधर्मजिज्ञासां प्र
तिसामान्यधर्मज्ञानस्य कारणत्वमितिनियमेन पूर्वं सा
मान्यधर्मप्रकारकज्ञानमावश्यकमत उपोद्घातसंगत्या
वेदसामान्यलक्षणमादौविविच्यते ॥ तत्रअपौरुषेयत्वेति
वाक्यत्वं वेदसामान्यलक्षणम् ॥ तथाच ब्रह्मणि सत्यं
तदलसत्वेऽपि विशेष्यदलाभावान्नातिप्रसङ्गः ॥ केवल
विशेष्यमात्रोक्तौ लौकिकवाक्येऽपि वेदत्वापत्तिभिया स-
त्यन्तम् ॥ एवं चाऽपौरुषेयत्वे सति वाक्यत्वं वेदत्वाव
च्छिन्ने एव वर्ततीति लक्षणसमन्वयः ॥ ननु वेदस्य
पौरुषेयतया कथमपौरुषेयत्वमिति चेदुच्यते ॥ वेदोऽपौ
रुषेयः अनिर्दिष्टकर्तृत्वात् ब्रह्मवत् इत्यनुमानेन वेदेअ
पौरुषेयत्वस्य साधितत्वात् ॥ ननु तस्य पौरुषेयत्वसा
धकत्वेन सत् प्रतिपक्षितत्वम् ॥ तथाहि वेदः पौरुषेयः
वाक्यकदम्बत्वाद्भारतादिवदित्यनुमानेन तस्य पौरुषेय
त्वम् ॥ एवमनुमानद्वयेन मध्यस्थस्योभयत्रापि साध्या
भावव्याप्यप्रतिहेतुमत्तानिश्चयत्वेन परस्परानुमितिप्र
तिबन्धात् अन्यतरविधेयकानुमित्यप्रसिद्ध्यापत्तिः ॥ इष्टा

पत्तौ तु नास्तिके शमतप्रवेशः स्यादतगुणदोषज्ञेनमा ध्यमिकेन समयनिबन्धादिवत्स्वकर्तव्यनिर्वाहाय सोपप त्तिकमन्यतरमतीयहेतौ दोषोद्भावनमवश्यं विधेयम् ॥ तथाहि वाचा विरूपनित्यया इत्यादिश्रुतिबलात् नित्यत्वव्यापकापौरुषेयत्वसाधनेन वेदे पौरुषेयत्व स्य बाधात् ॥ तत्साधकवाक्यकदम्बत्वहेतुर्बाधित इ तिदोषोद्भावनेन पौरुषेयत्वव्याप्यवाक्यकदम्बत्ववान् वेद इति निश्चयस्याप्रामाण्यज्ञानास्कन्दितत्वेनाप्रति बन्धकतया वेदोऽपौरुषेय इति सिद्धम् ॥ ननु अपौरुषेय त्वं पौरुषेयत्वाभावः अभावबुद्धिं प्रतिप्रतियोगिज्ञानस्य तन्त्रत्वमितिनियमेन पौरुषेयत्वज्ञानस्य तत्पूर्वमावश्य कतया तद्विषयं तदेव लाघवात्साधनीयमिति चेदेवं त र्हि बडवानले वन्हित्वलिङ्गेन शीतत्वाभावसाधने लाघ वात्सोतत्वमेवसिध्येत वन्हौ शीतत्वं ब्रवित्तमिति तत्र लाघवम किंचित्करमिति चेत् प्रकृतेपि तुल्यमित्यवेहि किंच भवन्मते वेदत्वं पौरुषेयत्वे सति वाक्यत्वमिति चेत्॥ तद्भवदीयं पौरुषेयत्वंकिमिति॥ पुरुषोच्चरितत्वं पौरुषेयत्वम् उतपुरुषाधीनोत्पत्तिकत्वं वा॥ आहोस्वित् स्वसजातीयोच्चारणानपेक्षोच्चारणविषयत्वं वा॥ तत्र

नाद्यः भागवतादीनामपि पुरुषोच्चरितत्वेनवेदत्वापत्तिः नाऽपि द्वितीयः तार्किकमते तत्साधने अस्मदादिनासिद्धसाधनतापत्तेः उक्तदोषानिवृत्तेश्च ॥ तथैवनतृतीयोऽपि भारतादीनामपि तत्त्वाद्वेदत्वं स्यादिति ॥ नन्वेवं सति पौरुषेयत्वाप्रसिध्या तदभावरूपापौरुषेयत्वस्यात्यन्तमलीकतया तद्वत्तामपि साधितुमशक्यमिति चेदुच्यते ॥ अस्तु तर्हि चरमकल्पोक्तमेव भारतादिप्रसिद्धं तत् ॥ तद्भिन्नमपौरुषेयत्वन्तु स्वसजातीयोच्चारणापेक्षोच्चारणविषयत्वम् ॥ सजातीयोच्चारणानपेक्षोच्चारणविषयत्वमिति यावत् तेनानुवादेनातिप्रसङ्गः ॥ तथाच विश्वेश्वरः सर्गाद्यकाले पूर्वसर्गसिद्धवेदानुपूर्विकमेव वेदं ब्रह्मणे सम्यगुपदिदेशेति यो ब्रह्माणं विदधाति पूर्वं यो वैवेदांश्च प्रहिणोति तस्मै इत्याद्यागम एवावेदयति ॥ अतोनित्यत्वव्यापकापौरुषेयत्वमेव वेदस्येति सिद्धम् ॥ ननु सामानिजज्ञिरे तस्माद्यजुरजायत इत्थं तया श्रुत्या अनित्यत्वमुच्यते ॥ तथा अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिश्रुतिविषयकविचारप्रवृत्तेन शास्त्रयोनित्वादिति वैयासकसूत्रेणाऽपि विस्पष्टमनित्यत्वस्य

बोधिततया पौरुषेयत्वेन कथमपौरुषेयत्वमिति चेन्न ॥ एवं सति अत एव च नित्यत्वमितिपारमर्षसूत्रमसंगतं स्यात् ॥ वाचाविरूपनित्यया इतिश्रुतिव्याकोपश्च॥ अतस्तस्य नित्यत्वमेवावश्यकम् ॥ अत एव स्वतन्त्रस्य कर्तुरस्मरणादेव हि स्थिते वेदस्य नित्यत्वं इति नह्यनित्याज्जगदुत्पत्तुमर्हति तस्याऽपि उत्पत्तिमत्त्वेन सापेक्षत्वात् ॥ तस्मान्नित्यो वेदो जगदुत्पत्तिहेतुत्वादीश्वरवदितिसिद्धमेव नित्यत्वमनेन दृढीकृतमिति, वाचस्पतिमिश्रोक्तिरपि साधु सङ्गच्छते ॥ विराडुत्पत्तितात्पर्येणैव सामानोत्पादिश्रुतीनां प्रवृत्या ईश्वरस्य कल्पादौ तत्प्रकाशकत्वेन कर्तृत्वेपि स्वरूपतः कर्तृत्वे तात्पर्याभावात् ॥ यथा सर्वेषु कल्पेषु अग्निहोत्रं जुहुयात्स्वर्गकामइति एवमादिवाक्यानामेव धर्मबोधकत्वं नतु अग्नौ होमात्स्वर्गो भवति इत्यादिवाक्यानां धर्मबोधकत्वम्॥ अतः कल्पादौ वेदानामभिव्यक्तिमपेक्ष्यैव कर्तृत्वं सिद्धम् ॥ स्पष्टं चेदं सूतसंहितायां ॥ ब्रह्माणंमुनयः पूर्वं सृष्ट्वा तस्मै महेश्वरः ॥ दत्तवान् सकलान् वेदान् स्वात्मन्येव स्थितानिमान् ॥ १ ॥ इत्यादि ॥ अत एव जैमिनीये आकृत्यधिकरणे पौरुषेयत्वस्य वक्तु

रस्मरणादित्यादिभिर्हेतुभिः शावरभाष्यकारैर्निराकृतत्वात् ॥ किं च सूतगीतायामपि श्रुतिः सनातनी शंभो रभिव्यक्ता न संशयः ॥ शंकरेण प्रणीतेति प्रवदन्त्य परे जनाः ॥ १ ॥ वेदोनादिः शिवस्तस्य व्यंजकः परमार्थतः ॥ अभिव्यक्तिमपेक्ष्यैव प्रणेतेत्युच्यते शिवः ॥ २ ॥ इत्यादि तथाच पूर्वकल्पीयवेदानुपूर्विसमानानुपूर्विक एव वेदोऽस्मिन् कल्पे प्रतीयते नित्यत्वात् ॥ ननु, जगत्प्रवाह नित्यत्ववदेवनित्यत्वं तस्य तद्व्यक्तित्वेन तु अनित्यत्वमेवेति चेत् ॥ वेदो नारायणः साक्षात्स्वयम्भूरितिशुश्रुमेतिश्रीमद्भागवतीयवचोऽपि व्याकुप्येत ॥ अपि च युगांते न्तर्हितान्वेदान् सेतिहासान् महर्षयः ॥ लेभिरे तपसा पूर्वमनुज्ञाताः स्वयंभुवेति सूतसंहितावचोऽपि ॥ किं च तैत्तिरीययजुरारण्यकेऽपि अजान् ह वै पृश्नीँस्तपस्यमानान् ब्रह्मस्वयंभ्वभ्यानर्षत् ॥ ऋषयो भवंस्तदृषीणामृषित्वमिति श्रूयते ॥ स्वयंभूप्रमाणान्तरमनुपजीव्यस्वयंभूतं स्वतः प्रमाणभूतमिति यावत् ॥ ब्रह्मवेदः तपस्यन्तो ऽजान् अयोनिसम्भवान् प्रश्नीन् पुरुषान् प्रतिअभ्यानर्षत अभिसंजगाम अतस्ते ऋषयो भवन् इत्यादिस्तदर्थः ॥ निरुक्तमध्येद्वितीयाध्याये

ऋषिदर्शनात् स्तोमान् ददर्शेत्यौपमन्यव इति वदन् यास्कमुनिरपि ऋषिशब्दप्रवृत्तिनिमित्तं वेदसम्बन्धिदर्शनमेव निर्णीतवान् ॥ किं चात एव तैत्तिरीयोपनिषदि अन्नमयादिपञ्चकोशविचारावसरे तृतीयमनोमयकोशविचारे श्रुतिः ॥ तस्माद्वा एतस्मात् प्राणमयात् अन्योन्तर आत्मा मनोमयः तेनैष पूर्णः स वा एष पुरुषविध एव तस्य पुरुषविधतां अन्वयं पुरुषविधः ॥ तस्य यजुरेव शिरः ऋग् दक्षिणः पक्षः सामोत्तरः पक्षः आदेशआत्मा अथर्वांगिरसः पुच्छं प्रतिष्ठा तदप्येषः श्लोको भवति इति ॥ भाष्यं अन्योन्तर आत्मा मनोमयो मन इति संकल्पाद्यात्मकमन्तः करणं तन्मयो मनोमयो यथान्नमयः सोऽयं प्राणमयस्याभ्यन्तर आत्मा तस्य यजुरेव शिरः यजुरित्यनियताक्षरपादावसानो मन्त्रविशेषः तज्जातीयवचनो यजुः शब्दार्थः तस्य शिरस्त्वं प्राधान्यात् ॥ प्राधान्यं च सन्निपत्योपकारात् ॥ यजुषा हि हविर्दीयते स्वाहाकारादिना ॥ वाचनिकी वा शिर आदिकल्पना ॥ सर्वत्र मनसो हि स्थान प्रयत्न नादस्वरवर्णपदवाक्यविषयातत्संकल्पात्मिका तद्भाविताबृत्तिः श्रोत्रादिकरणाद्वारा मनुःसंकेतविशिष्टा

यजुरित्युच्यते एव मृच्येवं साम च ॥ एवं च मनोवृत्तित्वे मन्त्राणांवृत्तिरेवावर्तत इति मानसो जप उपपद्यते ॥ अन्यथा अविषयत्वात् मन्त्रो नावर्तयितुं शक्यो घटादिवदिति मानसो जपो नोपपद्यते मंत्रावृत्तिश्चोद्यते बहुशः कर्मसु ॥ अक्षरविषयस्मृत्या वृत्त्या मन्त्रावृत्तिः स्यादिति चेन्न ॥ मुख्यार्थासम्भवात् ॥ त्रिःप्रथमामन्वाह त्रिरुत्तमामिति ऋगावृत्तिः मुख्योर्थः श्रूयते तत्र ऋचोऽविषयत्वे तद्विषयस्मृत्या वृत्तौ च क्रीयमाणायां त्रिःप्रथमामन्वाहेति ऋगावृत्तिर्मुख्योर्थश्चोदितः परित्युक्तः स्यात् ॥ तस्मान्मनोवृत्त्युपाधिपरिच्छिन्नमात्मज्ञानं मन्त्रा इति ॥ एवं नित्यत्वोपपत्तिर्वेदानां ॥ अन्यथा अविषयत्वे रूपादिनित्यत्वं च स्यात् ॥ नैतद्युक्तम् ॥ सर्वे वेदाः यत्रैकं भवन्ति समानलीनआत्मा जनानामिति श्रुतिर्नित्यात्मनैकत्वं ब्रुवन्ती ऋगादीनां नित्यत्वे समंजसा स्यात् ॥ ऋचो अक्षरे परमे व्योमन्यस्मिन् देवा अधिविश्वे निषेदुरितिच मन्त्रवर्णः इति भाष्यम् ॥ आनन्दगिरीयव्याख्याने तु त्रिःप्रथमामन्वाहेति सामिधेन्यः समिधो यदा अध्वर्युणा हूयन्ते तदा प्रयोयाजा अग्निमवत इत्येकादशवं सूक्तं हशोतास

तिं तासां चर्चां मध्ये प्रथमामृचं सूक्तस्यास्यां चर्षं हो
तात्रिरनुब्रूयादित्यादिविधिः श्रूयते इत्यर्थः ॥ ननु कालिदा
सादिवाक्यानामप्येतेन न्यायेन नित्यत्वापाताद्युक्तया
भासेन सानित्यत्वोपपत्तिरित्यपि न भ्रमितव्यम् ॥ सर्वे
वेदाः यत्रैकं भवन्तीत्यादिश्रुतिमिवं दत्वावच्छिन्नस्य ब्र
ह्मैक्यप्रतिपादनात् ॥ यद्यपि विजातीयशब्दराशिभूतस्य
वेदस्य जडत्वे नअजडस्य प्रकाशात्मना ऐक्यं तमः प्रका
शवद्दुर्घटम् ॥ तथापि पूर्वोक्तरीत्या मनोवृत्तिव्यापकविदा
त्मत्वोक्त्या सुघटमपि निरुक्तश्रुतिभ्यामधिकतया दृढीभा
वमगात् ॥ तदर्थस्तु जनानां साक्षितया मनसि भवो यः स त
दभिन्न इत्यर्थः ॥ अक्षरे नित्ये परमे निरतिशये व्यो-
मकल्पे ब्रह्मणि ऋचो विधिनिषेधरूपाः निषेदुस्तादा-
त्म्येन व्यवस्थिताः इत्यर्थः ॥ तथा च वेदानां निरुक्तापौ
रुषेयत्वव्यापकं पारमार्थिकमेव नित्यत्वं सिद्धम् ॥ न
नु वेदानां पारमार्थिकनित्यत्वे अद्वैतमतानुगतशांक
रभाष्यकाराद्वैतमतसिद्धांतभंगप्रसंगः स्यादितिचेन्न ॥
यथोक्तश्रुत्यादिप्रमाणैर्ब्रह्मात्मैक्यप्रतिपादनात् ॥ व
स्तुतस्तु अथातो ब्रह्मजिज्ञासेत्यादिमसूत्रेण मुमुक्षुणा
ब्रह्मज्ञानायारम्भविचारः कर्तव्य इत्युक्तम् ॥ किं तं

क्षणं तद्ब्रह्मेत्याक्षेपसंगत्या जन्माद्यस्येति द्विती
यसूत्रावतारः ॥ तत्र ब्रह्मणः जगज्जन्मादिकारणत्वं
तटस्थलक्षणलक्षितस्य सर्वज्ञत्वमुपलक्षितं तद्वाद्यो
यैव अस्य महतो भूतस्येतिश्रुतिं विषयीकृत्य शा
स्त्रयोनित्वादितिसूत्रप्रवृत्तिः ॥ तथा चैतादृशतट
स्थलक्षणलक्षितं सोपाधिकमेव निरुपाधिकं तु स्वरू
पलक्षणलक्षितं ॥ अत एव श्रुत्य महतो भूतस्य निश्व
सितमित्युच्यते ॥ निर्गुणे तु तत्केन कं पश्येत् केन
कं जिघ्रेदित्यादिश्रुत्यां सर्वकारकनिषेधकत्वमेव ॥
एवं च वेदस्य ब्रह्मरूपत्वेऽत्र सर्वतोमुखतया सो
पाधिकमेव लक्षीकृत्य प्रवृत्तानां सृष्ट्यादिश्रुतीनां यदनि
त्यत्वबोधकत्वं तदुपाधिविश्रान्तमेव न तु उपधेये ॥ अ
न्यथा जीवस्यापि अनित्यत्वापत्तिः स्यात् ॥ अतो वेद
त्वावच्छिन्नस्य साक्षात् परम्परया ब्रह्मण्येव तात्पर्याव
धारणात् सर्वस्य वेदस्याकपटमैककण्ठ्यं प्रस्फुटं संजा
घटीतीति सूत्रभाष्यकृतां परमाकूतमाविर्भवतीत्यवधे
यम् ॥ तथाचोक्तलक्षणेन यथा लक्ष्यसिद्धिस्तथा अव
यवशक्त्याऽपि तत् सिद्धिः ॥ तथा हि वेदो नाम विद्य
न्ते ज्ञायन्ते धर्मार्थकाममोक्षा अनेनेति व्युत्पत्त्या च

तुर्वर्गज्ञानसाधनभूतो विजातीयनिबन्धविशेषो वेदश
ब्दार्थः ॥ विदेर्घञ्च् बाहुलकात् ॥ एवं मन्त्रब्राह्मणयो
र्वेदनामधेयमिति सौत्रलक्षणमपि ज्ञेयम् ॥ यो ह्यव्य
भिचरितस्वरवर्णादिपठनपाठनक्रमागतः सन् सर्वदा
सर्वदेशेषु प्रतिशाखमविभागेन वर्तमानः एको मंत्र
राशिः। अपरस्तुविधिनिषेधार्थवादसम्प्रश्नाख्यानादिभि
स्तस्यैव प्रायो विनियोगप्रख्यापक उपव्याख्यानभूतो
वाक्यनिचयो ब्राह्मणराशिः ॥ अनयोरेकः संग्रहो वेद
इत्यभिधीयते ॥ किं च वेदनिबन्धेषु मंत्रब्राह्मणभागौ
परस्परमसंमिश्रावेव प्रायः पठ्येते ॥ क्व चित्तु ब्राह्म
णमिश्रोऽपि मंत्रभागः पठितोऽस्ति ॥ एवमुभयोरपिवि
धिमंत्रार्थवादनामधेयनिषेधेति पञ्चावयवविराजितोऽयं
वेदराशिरेकमूलोऽप्यनेककर्मफलो महाकल्पतरुवरः पर
मतिजागरूकतया वरीवर्तितराम् ॥ अत एवाऽस्य फ
लीभूतं कर्म विधिना विहितं मंत्रेण स्मृतं अर्थवादेन
प्ररोचितं अभिधेयेनाभिहितमपि निषेधेन परावर्तितं स
देवाऽभ्युदयकारीभवति ॥ ननु प्रतिशाखं यज्ञादिकर्मा
णि भिद्यन्ते तत्कथमेककर्मफलोऽयं वेदशाखीति चेदु
च्यते ॥ तत्तच्छाखायामवान्तराकृतिभेदेऽपि कर्मत्वजा

तिव्यञ्जकप्रधानाकृतिभेदाभाव एवप्रतीयते ॥ नह्ये
कस्यां शाखायां विहितस्याग्निहोत्रादिकर्मणः स्थाने वि
जातीयस्य ग्रहयज्ञादेरपरस्यां शाखायां विधानमस्ति
तस्मान्न प्रतिशाखं कर्मभेद इति मन्तव्यम् ॥ यदि
प्रतिशाखं बदरामलकादिवत् जात्यैव कर्मभेदः स्यात्
तदा एकमूलाभावात् आदित एवारभ्य विद्यमानत्वात्
वृक्षान्तरवद्वेदान्तराण्येवोच्येरन् नशाखान्तराणि ॥ त
स्मादेकमूलः समानफलोयं महाकल्पवृक्षइतिसिद्धम् ॥
एवं च उक्तरीत्या पारम्पर्यक्रमागतमेव वेदज्ञानं स
र्वेषां न तु ऋषयोऽप्यस्य स्वतन्त्राः कर्तार इतिलभ्यते
अत एवाऐतेरेयब्राह्मणे पठ्यते प्रजापतिरकामयत प्र
जायेय भूयान् स्यामिति ॥ स तपतप्यतेत्याद्यारभ्य त
देतदोमितिब्राह्मणपर्यालोचनया प्रजापतिरेवाग्नेः स्वत
पः प्रभावेन सप्रणवव्याहृतिकां वेदत्रयीमपश्यत् ॥ त
तो यथायथं निजतपोबलेन तैस्तैऋषिभिस्ते ते मंत्रा
दिभागाः परमेश्वरप्रसादत उपलब्धाः यथास्थितस्वर
वर्णानुरूपं पठिताः सन्तः सर्वलोकेषुपठिताः इतिप्रती
यन्ते ॥ तत्र ऋषिशब्दार्थस्तु ऋषति वेदं पश्यतीति
ऋषिः धातूनामनेकार्थत्वादत्र ऋषेर्ज्ञानोर्थइति वृत्तिः ॥

गत्यर्थकानां ज्ञानार्थकत्वाद्धा ॥ तथाच प्रकृते हि दर्शनं प्रत्यक्षीकरणमेव न तु चाक्षुषमित्यवधेयम् ॥ किंच शतपथब्राह्मणे ॥ ऋषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्चाहमित्यादिना ऋषिर्वामदेवः त्रिश्वरूपब्रह्मभावं साक्षात्कृतवतः स्वस्यानुभवमनुवदति ॥ अपिच यस्य वाक्यं स ऋषिरिति ॥ यस्य दृष्टं वाक्यं स ऋषिरित्यर्थः ॥ एवं गृत्समदो द्वितीयं मण्डलमपश्यदिति च सर्वानुक्रमगतमनुगतमेवार्थमनुवदति ॥ किंचामुमेवार्थं शौनकोऽप्याह ॥ यस्य वाक्यं स ऋषिर्याते नोच्यते सा देवता यदक्षरपरिमाणं तच्छन्दोऽर्थेप्सवो ऋषयो देवताछन्दोभिरुपाधावन् इति ॥ तथा चोक्तऋषयोऽपि मंत्रद्रष्टारएव न तत्कर्तार इति सिद्धम् ॥ अथैषां चातुर्विध्यमुक्तं पूर्वाचार्यैः ॥ ऋषीणां ऋषिपुत्राणांमृषिकाणां स्वयं भुवां॥ तथानामाभिजानीयाद्यथैषां मन्त्रदृष्टयः ॥ १ ॥ प्रवरैर्ये समाख्याता ऋषयस्त इति श्रुतिः । तत्पुत्रपौत्रनप्तारऋषिपुत्रा इति स्मृताः ॥२॥ राजन्यवैश्या ऋषिकास्त्रियस्ता नीचयोनयः ॥ देवादेवाप्सरो नद्यो गन्धर्वास्ते स्वयम्भुव इति ॥ ३ ॥ तेषामुपनयनाद्यभावेऽपि स्वयं प्रतिभातवेदत्वमेव स्वयम्भु

त्वम् ॥ तथा च देवाद्याः उपनयनाद्यभाववन्तः स्वयंप्र
तिभातवेदत्वात् ॥ इत्याद्यनुमानमपि मानतयोपपद्य
ते ॥ एवं चापौरुषेयब्राह्मणवाक्यघटितो ऋष्यादिदृष्टो
विजातीयमन्त्रराशिर्वेद इति फलितम् ॥ ननु लाघवा
न्मन्त्रपाठस्यैव मुख्यत्वेन वेदत्वमस्तु अलमपरेणे
ति चेदुच्यते ॥ यद्यपि मन्त्रब्राह्मणपाठयोर्मध्ये ब्राह्मण
पाठस्य प्रयोगानन्तर्गतत्वेन इदमेवं कार्यमितिज्ञापनो
त्तरं कृतार्थत्वेऽपि अनुष्ठानक्रमस्य स्मरणक्रमाधीनत
या प्रयोगकालीनव्यापारवत्वेन मन्त्रपाठस्यैव मुख्य
त्वम् ॥ तथाऽपि समिधो यजति तनूनपातं यजति इ
डो यजति बर्हिर्यजति स्वाहाकारं यजति ॥ इत्यादिब्रा
ह्मणवाक्यानामपि क्रमस्मारकतयोपयोग इत्यवधेयम्॥
तथा च दग्धाश्वरयन्यायवदन्धपंगुवद्वा परमोपकारक-
ब्राह्मणसहकृतमंत्रसमूहस्यैव वेदत्वमिति फलितम् ॥
अन्यथा विध्यादीनामविस्पष्टतया अबोधे यागादौ प्र
वृत्तिरेव न स्यादिति ध्येयम् ॥ किञ्च निरुक्तलक्षणे इ-
ष्टप्राप्त्यनिष्टपरिहारालौकिकसाधनबोधकत्वमपि विशेष
णं देयम् ॥ तेन विध्यादीनामपि निर्विचिकित्सं संग.
हात् अलौकिकपदं तु प्रत्यक्षानुमानयोरतिव्याप्तिवार

कमिति संक्षेपः ॥ एवं वस्तु शिषाधयिषोः पुरुषस्योक्तरीत्यासामान्यधर्मप्रकारकज्ञाने समुदिते एव विशेषधर्मप्रकारकं ज्ञानं मे भूयादिति विशेषधर्मजिज्ञासोदेति नान्यथा ॥ यथा सामान्यतः घटत्वज्ञानोत्तरमेव रक्तघटो मे भूयादित्यादिवत् ॥ तस्याऽस्तु सामान्यधर्मव्याप्यविशेषधर्मप्रकारकबोधानुकूलव्यापाराधीनत्वात् ॥ अत एव प्रकृते वेदत्वेनाविभक्तवेदेऽवगतेऽपि तद्विभागमन्तरा विशिष्य तल्लक्षणकथनमसंगतं स्यात् ॥ अतःपूर्वं स एव वेदो विभज्यते ॥ तदुक्तमभियुक्तैः ॥ सर्वार्थवेदको वेदश्चतुर्धाभिद्यते क्रमात् ॥ ऋग्वेदोऽथ यजुर्वेदः सामवेदोह्यथर्वण इति ॥ १ ॥ यद्यपि बहुषु श्रुतिस्मृत्यादिवाक्येषु वेदत्रयी संकीर्त्यते न तुरीयाथर्वणस्तथाऽपि ब्रह्मवेदशब्देन चतुर्थस्याप्यथर्वणस्य मुण्डकाद्युपनिषदिश्रवणात् पुराणादिष्वपि बहुशः श्रवणाच्चतुर्थेत्युक्तम् ॥ तथा चरणव्यूहेऽपि ॥ अथातश्चरणव्यूहं व्याख्यास्यामः तत्र निरुक्तं चातुर्विध्यं चत्वारो वेदाः विज्ञाताः भवन्तीति ॥ तथामहाभाष्ये पतञ्जलिराह ॥ महान् शब्दस्य प्रयोगविषयः सप्तद्वीपा वसुमती त्रयोलोकाश्चत्वारो वेदासाङ्गासरहस्याः बहुधाभिन्ना इ

ति ॥ ऋग्वेदेऽपि चत्वारि शृङ्गा इत्यादि ॥ निरुक्तेऽपि चत्वारि शृङ्गेति वेदा वा एते उक्ता इति यास्केनोक्तम् ॥ वेदभाष्ये सायनाचार्यैरपि तथैवोक्तमिति ज्ञेयम् ॥ तत्र ऋग्वेदलक्षणं तु नियताक्षरपादावसानत्वे सति मन्त्रत्वमिति ॥ यजुर्वेदे अतिप्रसङ्गभञ्जकं नियतपदम् ॥ अनियतपादावसानत्वे सति मन्त्रत्वं यजुर्वेदस्य लक्षणम् ॥ अत्रापि ऋग्वेदेऽतिप्रसक्तिनिरसकमनियतेति ॥ ऋग्वेदमानमुक्तं चरणव्यूहे ॥ ऋचां दशसहस्राणि ऋचां पञ्चशतानि च ॥ ऋचामशीतिपादश्च तत्पारायणमुच्यते इति ॥ १०५८० अस्य वेदस्य पंच शाखाः सन्ति ॥ तद्यथा शाकलाः बाष्कलाः आश्वलायनाः सांख्यायनाः माण्डुकाश्चेति ॥ तथा चोक्तं शौनकीये प्रातिशाख्ये ॥ ऋचां समूहो ऋग्वेदस्तमभ्यस्य प्रयत्नतः ॥ पठितः शाकलेनादौ चतुर्भिस्तदनन्तरम् ॥ सांख्याश्वलायनौ चैव माण्डुको बाष्कलस्तथा ॥ बह्वृचा ऋषयः सर्वे पञ्चैते एकवेदिन इति ॥ अत्र शाकलादिषु ऋषिशब्दो गौण एव न तु मुख्यः ॥ आश्वलायनगृह्ये देवर्ष्याचार्य तर्पणविधिविधायके सूत्रे शाकलादीनामृषित्वपरिगणनात् ॥ आचार्येषुगणनाच्च॥

एवमैतेयी कौषीतकी शैशिरी पैंगी इत्यादयोऽपि शाखा भेदाः क्वचिदुपलभ्यन्ते ॥ तथा विष्णुपुराणेऽप्युक्तम् ॥ मुदगलो गोकुलो वात्स्यः शैशिरः शिशिरस्यथा ॥ पंचैते शाकलाः शिष्याः शाखाभेदप्रवर्तकाः इति ॥ एवं चाध्ययनसम्प्रदायप्रवर्तकानामेतेषांशाकल्याद्याचार्याणां प्रवचनभेदः शाखाभेदे कारणम् ॥ ततश्च मन्त्रब्राह्मणात्मकः स्वाध्यायैकः शाखेति पर्यवसितोऽर्थः ॥ सा च शाखाऽध्ययनभेदाद्वासूत्रभेदाद्वा भिद्यते ॥ एकस्मिन्नेव वेदे सूत्रब्राह्मणयोरन्यतरभेदेन योऽवान्तरभेदः सोऽध्ययनभेदकृतः ॥ यथा शाकलबाष्कलयोर्द्वयोः शाखयोः स्वाध्यायो यत्किञ्चिद्भिद्यते ॥ सूत्रं तु भिन्नाध्ययनयोर्द्वयोरप्याश्वलायनीयमेकमेव ॥ यथैकस्यामपि समपाठायां तैत्तिरीयशाखायां अवान्तरशाखाभेदो बौधायनापस्तम्भहिरण्यकेशीप्रभृतिसूत्रभेदकृतस्तद्वत् ॥ एवं च प्रवचनभेदात्प्रतिवेदं भिन्नाः भूयस्यः शाखाः सन्ति ॥ प्रवचनशब्दः सूत्रप्रातिशाख्यशिक्षाद्यङ्गवाचकः ॥ तथा च अन्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ॥ श्रोत्रियान्वयजाश्चैव विज्ञेयाः पंक्तिपावनाः इति ॥ तृतीयाध्यायगतमानवचनव्याख्यायां कुल्लूकभट्टः आह अकर्षेण

योध्यते वेदार्थः एभिरितिप्रवचनान्यङ्गानि इति ॥ के
चित्तु प्रवचनवचनं ब्राह्मणमतस्तेनाऽपि प्रकर्षेण वे
दार्थस्य परिभाषणादित्याहुः ॥ अथ ऋग्वेदस्य स
प्तदशाधिकमेकसहस्रं सूक्तानि सन्ति ॥ तथैव षडधिक
द्वे सहस्रे वर्गाः ॥ चतुःषष्ठिरध्यायाः दश मण्डलानि ॥
अष्टावष्टकानीत्येवं विभागः परिकल्पितः ॥ तत्र सूक्त
लक्षणं तु यथा बृहद्देवतायां ॥ सम्पूर्णं ऋषिसूक्तं तु
सूक्तमित्यभिधीयत इति ॥ सम्पूर्णं निराकाङ्क्षं यदृषेर्वे
दस्य वाक्यं तत्सूक्तमित्यर्थः ॥ तत्त्रिविधम् ॥ ऋषिसू
क्तं देवतासूक्तं छन्दःसूक्तमिति ॥ एतल्लक्षणान्यपि बृ
हद्देवतायामुक्तानि ॥ ऋषिसूक्तानि यावन्ति सूक्तान्येक
कस्य वै कृतिः ॥ स्तूयते कान्तुयावत्तु तत्सूक्तं दैवतं
विदुः ॥ समानछन्दसो मंत्राः छन्दः सूक्तं तदुच्यते इ
ति ॥ अध्यापकक्रमागतत्वमेव वर्गाध्याययोर्लक्षणम् ॥
मण्डललक्षणं तु तत्तदृषिदृष्टानां बहूनां सूक्तानां
एकस्मृषिकर्तृकः संग्रहो मण्डलमिति संक्षेपः ॥ क्रमप्रा
प्तोयजुर्वेदो निगद्यते ॥ तत्र एकशतमध्वर्युशाखा इ
ति महाभाष्ये पतञ्जलिराह ॥ यजुर्वेदस्य षडशीति
र्भेदाः भवन्ति ॥ इतिचरणव्यूहः ॥ परन्त्वेतेषु शाखाभे

देषु कतिचिदुच्छिन्नाःसन्तो नामतो न ज्ञायन्ते॥ येषां नामानि ग्रन्थेषूपलभ्यन्ते तान् भेदान् वदामः ॥ तद्यथा चरकाः अह्वरकाः कठाः प्राच्यकठाः कपिष्ठलकठाश्चारणीयावारन्तीयाः श्वेताः श्वेततराः औपमन्यवः पाताण्डिनेयाः मैत्रायणीयाश्चेति तत्र मैत्रायणीयानामपि षट् भेदाः भवन्ति ॥ मानवाः वाराहाः दुन्दुभाः छागलेयाः हरिद्रवाः श्यामायनीयाश्चेति ॥ खाण्डिकेया अपि पञ्चधाभिन्नाः॥ अपस्तम्बी बौधायनी सत्याषाढी हिरण्यकेशी शाम्यायनी चेति ॥ वारन्तीयाः खाण्डिकीयास्तैत्तिरीया औखीयाः इत्यत्र तित्तिरिवरतं तु खण्डिको खाञ्छण इतिपाणिनीयसूत्रेण छण् प्रत्ययः ॥ आपस्तम्बीत्यादि पञ्चसु कलापीवैशम्पायनान्ते वासिभ्यश्चेति सूत्रेण णिनिः॥ एतेषां सर्वेषां स्वाध्यायमानं संक्षेपेण चरणव्यूहो प्रोक्तम्॥ अष्टादशसहस्राणि मन्त्रब्राह्मणयोः सह॥ यजूंषि यत्र पठ्यन्ते स यजुर्वेद उच्यते इति ॥ अत्र यजुर्वेदपदेन कृष्ण यजुर्वेद एवबोध्यते ॥ अत उक्ताः सर्वे भेदाः कृष्णयजुः शब्देन व्यवह्रीयन्ते॥ वक्ष्यमाणकण्वमध्यन्दिनादयस्तु शुक्लयजुः शब्देन॥ एतेषां शुक्लत्वकारणं तु वक्ष्यमाणनिबन्धे

मन्त्रैकीभावमापद्यते ॥ इदानीं तु लक्षणादिविचार
णं विधीयते ॥ तत्र मन्त्रब्राह्मणयोर्वेदस्त्रिगुणं यत्प
ठ्यते ॥ यजुर्वेदः स विज्ञेयः अन्यत्र शाखान्तरः स्मृ
तः ॥ ३ ॥ इति कात्यायनोक्तचरणव्यूहवचने अ
ध्यायेतरं लक्षणं पृथक्करणं प्रत्ययार्थः अधिकरणं तस्य
पदस्य सम्बन्धेन अध्याये अन्वयः तथा च पदाधिकरण
त्रिगुणपाठितमन्त्राभिन्न ब्राह्मणद्वयाभिन्नाध्यायत्व
ं मध्यन्दिनशाखाविशिष्टशुक्लयजुर्वेदलक्षणं फलित
म् ॥ अत्र केवलाध्यायत्वमात्रोक्ते ऋग्वेदे अतिव्या
प्तिः तद्वारणाय मूलं दलम् ॥ तत्रापि केवलमन्त्राभि
न्नब्राह्मणाभिन्नाध्यायत्वमात्रोक्तौ तु कृष्णयजुर्वेदेऽति
व्याप्तिप्रसङ्गः ॥ अतस्त्रिगुणपठितमन्त्राभिन्नब्राह्मणद्वया
भिन्नत्वं अध्यायविशेषणं तथा च एतावता अध्यायत्वस्य
सत्त्वादिति प्रसङ्गभङ्गः सञ्जायते ॥ तावन्मात्रोक्तौ तु
लक्षणेऽपि लक्षणेन शान्तो ह्यतिव्याप्तिरिति न्यायेन कण्वशा
खायामतिप्रसङ्गवारो जागरूक एव ॥ अतः पदाधिकरणस्थि
तित्वमध्यायविशेषणम् ॥ तथा चात्र यत्पदं प्रकृतशा
खाविशिष्टशुक्लयजुर्वेदपरं तदधिकरणवृत्तित्रिगुण
पठितमन्त्राभिन्नब्राह्मणद्वयाभिन्नोऽध्यायस्तद्वत्त्वे सति

तत्वं माध्यन्दिनशाखाविशिष्टशुक्लयजुर्वेदएव निर्वती ति लक्षणसमन्वयः ॥ त्रिगुणपठितत्वं चात्र त्रिधानु दात्तस्वरितरूपं संहितापदक्रमरूपं वा बोध्यम् ॥ वस्तु तस्तु मन्त्र भागे गायत्रिमन्त्रस्य त्रिगुणपठितत्वं ॥ ओं कारस्य वा स्वातन्त्र्येण ब्राह्मणभागे तु विधिरूपतया प्र थमं उपसंहाररूपतया अपरं पुनरेकवारं मन्त्रभागेऽपि॥ यथाशाखामच्छिनत्ति ॥ इषेत्वोर्जेत्वेति ॥ त्रेधा तद्वाहैव दाहैवेत्वे त्यूर्जे त्वे ति ॥ योऽष्टादुर्ग सो जायतो तस्मै त दाहैत्यादिबोध्यम् ॥ ब्राह्मणद्वये तादृशमन्त्राभिन्नत्वम भेदार्थं कर्मधारयबलादेव ॥ कथमत्र कर्मधारय इति चेदुच्यते ॥ मन्त्रो चेति ब्राह्मणे च मन्त्रब्राह्मणे कर्म धारयस्याभेदार्थकतया मन्त्राभिन्नब्राह्मणेत्यर्थः ॥ तस्मै रण्याय इत्यत्र तच्छब्दोत्तरपष्ठ्या अभेदार्थकत्वं राहोः शिर इतिवत् ॥ तस्य आश्रयतासम्बन्धेनाध्यायेऽन्वयः ॥ अत्राध्यायशब्दः वेदपरपर्यायः ॥ एवं च तादृशमन्त्रा भिन्नब्राह्मणद्वयाभिन्नाध्यायेत्यर्थः ॥ ईदृशोऽध्यायः वा यस्यां शाखायां उक्तरीत्या त्रिगुणं यथा भवति ॥ तथा प ठ्यते ॥ गुरूच्चारणाधीनोच्चारणरूपाध्ययनविषयीक्रि यते ॥ आवर्तते त्रा सः शाखाविशेषः शुक्लयजुर्वेदस्तस्य

दिति॥ तद्विषयसावचमेति॥ वचनमेतत्सूत्रभाष्योक्तत्र
ह्लिनोर्मिन्यस्तम्॥ तस्य वारस्येन याज्ञवल्क्यः पुराणप्रो
क्तेति॥ निर्दिश्यते॥ तथा प्रोक्तसूत्रकारमतं स्वरस्य
धीनतारोपणभ्रमविषयमिति सिद्धम्॥ अन्यथा कृत
पिनारम्भो व्यर्थः स्यात्॥ पुराणपदे नैष्वत ह्यक्तिः सि
द्धत्वात्॥ यि शाकल्यस्य ऽपूर्व वैशम्पायनान्तेषु सिद्धेन
शाट्यायनादितुल्यकालभावित्वाच्च॥ अर्थमेतस्माद्
कस्याज्ञवल्क्येति॥ चतुरलया॥ मूर्धाग्रदर्शनादित्यादि
स्पष्टं शब्देन्दुशेखरे इति संक्षेपः॥ तथा प्रोक्तैरपोह्य
तसंगत्या। विद्दलावच्छिन्नलक्षणाभिधानपूर्वकमकृतजि
ज्ञासितशुक्लयजुर्वेदलक्षणाभिधानेन लक्ष्ये सिद्धे प्रि
पुनः स्थूणानिखननन्यायेन वक्ष्यमाणमन्थतः सम्पू
र्णीक्रियते इत्यवधेयम्॥ अथ सामवेदलक्षणे तु गा
याधारत्वे सति गीतित्वम्॥ अत्र गीतित्वे शुद्धगीतः
यपि वर्तते इति पूर्वदलम्॥ ऋगाद्याधारकमादौ पूर्व
दलसत्त्वेऽप्युत्तरदलम्॥ तथा च विशिष्टे लक्ष्ये पर्यन्ते
लि लक्षणसमन्वयः॥ इदमत्रावधेयम्॥ सामवेदस्य
सहस्रं शाखाः आसन्॥ तत्रानध्यायेष्वधीयमानाः श
तक्रतुः शाखाध्यायिनः इन्द्रेण शतपर्वणा निहतास्ततः

प्रभृतिबह्वयः शाखाउच्छिन्नाः कश्चिद्देवावशिष्टाः प्रवर्
न्ते ॥ तद्यथा राणायणीयाः शाठ्यमुग्राः कापोलाः मे
हांकावस्त्र शांखलिकाः शार्दूलाः कौथुमश्चेति ॥ तेष्व
कौथुमानां षट्भेदाः सन्ति ॥ आसुरायणाः वातायनाः
प्रांजलयोवैनधृताः प्राचीनयोग्याः नैगेयाश्चेति ॥ एत
त्प्रमाणमुक्तं चरणव्यूहे ॥ अष्टौसामसहस्राणिसामानिच
तुर्दश ॥ ऊह्यानिसरहस्यानीत्येतत्सामगणः स्मृतः
इति ॥ अथर्वणस्य तु शांतिप्रतिष्ठादिकर्मकरणत्वं स
ति मंत्रविशेषत्वं लक्षणम् ॥ तथाच मन्त्रविशेषेऽति
व्याप्तिवारकं पूर्वदलम् ॥ शान्तिप्रतिष्ठादिकर्माणिअ
तिव्याप्तिवारकमुत्तरदलमिति लक्षणं लक्ष्ये समन्वे
त्व्यं एतस्याथर्वणस्य नवैवभेदाः सन्तितेयथापैप्पला
दाः शौनकीयाः दामोदास्तोतायनाः जायलाः ब्रह्मपला
शाः कुनखीदेवदर्शाचारणविद्याश्चेति ॥ एतत्प्रमाणमुक्तं
चरणव्यूहे-द्वादशानिसहस्राणिमन्त्राणांत्रिशतानिच ॥
गोपथंब्राह्मणं वेदे थर्वणेशतपाठकमिति ॥ इदमत्र तत्वं
प्रभार्यं ॥ मंत्रब्राह्मणयोर्वेदत्वाविशेषेपि अत्र लोके श्री
गवत्तरणं मंत्रभागस्य ततःकालांतरेण ब्राह्मणभागस्ये
ति सर्वे प्राचीन ग्रंथेषु ततद्विदमंत्राणां यज्ञकर्मसु य

यज्ञप्रयोगस्य बहुधा प्रदर्शितत्वात् वक्ष्यमाणानि
कल्पसूत्राणि ब्राह्मणस्य पोत्तरकालानि ॥ तेषांब्राह्मणग्रं
ग्रन्थबोधितयज्ञादिकर्मकांडप्रपंचभूतत्वादितिबोध्यं ॥ त
स्यैतस्यवेदचतुष्टयस्य शिक्षाकल्पो व्याकरणं निरुक्तं
छंदोज्योतिषमिति षडंगानिसंति ॥ तेषां प्रयोजनान्य
प्युच्यंते ॥ वैदिकधर्मानुष्ठानेन द्विजातीनां ब्राह्मणादी
नां सकलपुरुषार्थसिद्धिरिति वैदिकः सिद्धांतः ॥ तत्र
वैदिकवाक्यानां गूढार्थत्वात्क्रमपठितत्वाच्च नकेवलं
स्मस्तेभ्यो यथावत्कर्मस्वरूपमवगंतुं शक्यते ॥ तस्मा
द्वेदार्थविद्यासंपन्नैः कविभिराचार्यैर्वेदेभ्योलोकस्य धर्मा
वबोधनार्थमिमान्यंगानिप्रवर्तितानि ॥ तत्र शिक्षानाम
स्वरवर्णाद्युच्चारणरित्युपदेशकं शास्त्रं ॥ सा च शि
क्षा अथशिक्षांप्रवक्ष्यामि पाणिनीयंमतं यथेति ॥ इयं पा
णिनीयशिक्षैवसर्ववेदसाधारणा ॥ अन्याअपि प्रतिशा
खं भिन्ना बह्व्यः शिक्षाप्रातिशाख्यपदेन व्यवहृताः सं
ति ॥ यथाशौनकप्रोक्तं पार्षदाख्यमृग्वेदस्य ॥ एवम
न्यदपिप्रातिशाख्यमुदाहर्तव्यं ॥ कल्पोनामवेदविहितानां
कर्मणामानुपूर्व्येण सप्रपंचकल्पनात्मकं शास्त्रं ॥
व्याकरणंनामशब्दार्थव्युत्पत्तिकरंशास्त्रं [illegible]

वेदप्रसिद्धानामेवसृष्टिस्थितिप्रलयानां मनुहरिश्चंद्रप्रभृतीनांचवर्णनायपंचद्विपंचलक्षणलक्षितो व्यासविरचितो ग्रन्थविशेषः ॥ तच्च पुराणमष्टादशविधम् ॥ तथाहि ब्राह्मं पाद्मं वैष्णवं च शैवंलैङ्गं च गारुडम् ॥ नारदीयं भागवतमाग्नेयं स्कान्दमेव च ॥ भविष्यं ब्रह्मवैवर्तं मार्कण्डेयंच वामनम् ॥ मात्स्यं कौर्मं च वाराहं तथा ब्रह्माण्डसंज्ञितम् ॥ अष्टादशपुराणानि व्यासोक्तानि विदुर्बुधा इति ॥ मीमांसानामवेदवाक्यार्थ विचारार्थकं शास्त्रम् ॥ तच्च पूर्वमुत्तरं चेति द्विविधम् ॥ तत्र पूर्वमीमांसा अथातोधर्मजिज्ञासेत्यादि द्वादशाध्यायीरूपाधर्ममीमांसाभगवताजैमिनिमुनिनाप्रणीता ॥ उत्तरा तु अथातोब्रह्मजिज्ञासेत्यादि चतुराध्यायीरूपा ब्रह्ममीमांसाभगवताव्यासाचार्येण प्रणीतेत्याहुः ॥ न्यायविस्तरो नामप्रमाणैरर्थपरीक्षणोपदेशकं शास्त्रम् ॥ गौतमेनमुनिनाकणादेन च विरचितम् ॥ तदेवं वेदार्थविद्भिराचार्यैः सर्वजनानां सुहृद्भावमुरीकृत्य वेदार्थज्ञापनायांगानि चोपाङ्गानिप्रवर्तितानि॥ तदनुसारेणैवार्वाचीनैःसर्वे वेदार्थो यथाकथंचित् ज्ञायते ॥ नलन्यथाज्ञातुं शक्यते ॥ तथाचोक्तं पूर्वाचार्यैः ॥ नप्रत्यक्षमनृषेरस्तिम

न्त्र इति ॥ सोयं साङ्गोपाङ्गोवेदः प्रवृत्तिनिवृत्तिलक्षण धर्मस्य नीतिव्यवहारज्ञापकविद्यानां च भूमिरित्याह याज्ञवल्क्यः ॥ पुराणं न्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः वेदाः स्थानानिविद्यानां धर्मस्यच चतुर्दशेति ॥ षडङ्गानि चत्वार्युपाङ्गानि चत्वारोवेदाश्चैतेधर्मादेर्विद्यानां स्थानानिक्षेत्रभूमय इत्यर्थः ॥ एवं चोक्तरीत्या वेदत्वावच्छिन्नस्य सामान्यविशेषलक्षणलक्षिततया पारमार्थिकनित्यत्वानन्त्यवत्तया च निर्विचिकित्सं ब्रह्मरूपत्वं सिद्धम् ॥ पुनस्तल्लक्षणं द्विविधं स्वरूपलक्षणं तटस्थलक्षणं चेति ॥ तत्राद्यं यथायत्स्वरूपान्तर्गतं सत् इतरव्यावृत्ततयालक्ष्यं बोधयति तत्स्वरूपलक्षणम् ॥यथा गोः सास्नादिमत्वविशिष्टशृङ्गित्वम् ॥ द्वितीयं यथा यावल्लक्ष्यकालमनवस्थितत्वेन स्वरूपानन्तर्गतं सत् यल्लक्ष्यमितरव्यावृत्तं बोधयति तत्तटस्थलक्षणं ॥ यथागोविशेषस्य अलंकारविशेषादि ॥ यथा वा ब्रह्मणः सत्यं ज्ञानमनन्तमित्यादिश्रुत्या सत्यादिकं स्वलक्ष्यस्वरूपमेव सत् असज्जडदुःखप्रपञ्चव्यावृत्ततयालक्ष्यं बोधयति इतिस्वरूपलक्षणमुपपन्नम् ॥ जगज्जन्मादिकारणत्वं लक्षणं तु नहि सर्वदाऽस्ति प्रलयादिकाले तदभा

वात् ॥ अतः स्वरूपानन्तर्गतं सदेवाकाशादिव्यावृत्त मीश्वरं बोधयति इदमेव तटस्थत्वं तस्य ॥ एवं प्रकृते पि स्वरूपतटस्थलक्षणं सम्यक् समन्वेतीत्यवधेयम् ॥ किञ्च दूषणत्रयरहितधर्मस्यैव लक्षणत्वं सर्वानुमतम्॥ तथाहि विशिष्टबुद्धिम्प्रतिविशेषणज्ञानस्य कारणत्वमि ति नियमेन तच्च दूषणत्रयरहितत्वज्ञानाधीनम् ॥ दू षणत्रयरहितत्वं च दूषणत्रयाभावः अभावबुद्धिम्प्रति प्रतियोगिज्ञानस्य तन्त्रत्वमिति नियमेन तदपिदूषण त्रयज्ञानाधीनम् ॥ दूषणत्रयं अव्याप्त्यतिव्याप्त्यसम्भ वरूपम् ॥ तथाचेतद्दूषणत्रयरहितत्वविशिष्टधर्मएव लक्षणमिति सिद्धम् ॥ अथात्रदूषणत्रयरहितत्वं दूषण त्रयाभावः सः दूषणत्रयत्वावच्छिन्नप्रतियोगिताको वा दूषणत्रयनिष्ठप्रतियोगिताकः इति ॥ तत्र नाद्यः अति व्याप्तधर्मस्य शृङ्गित्वस्यापि लक्षणत्वापत्तेः॥ कुतइति चेत् तत्रापिव्याप्तिदोषसत्वेपिअव्याप्त्यसम्भवरूपदो षद्वयाभावेनएकसत्वेपिद्वयोनास्तीतिवत्॥ द्वयसत्वेपित्र यन्नास्तीतिप्रतीत्यायथाघटवत्यपिभूतले घटपटोभयंना स्तीतिवत्॥घटपटोभयवत्यपिभूतलेघटपटमठाभावानुभ ववत्॥ तादृशशृ गित्वस्यअतिव्याप्तिदोषग्रस्तत्वेपिनि

रुकरीत्यादूपणत्रयत्वावछिन्नप्रतियोगिताकाभावविशि
ष्टधर्मत्वात् ॥ अतस्तादृशदूपणत्रयनिष्ठप्रतियोगिता
काभाव एववक्तव्यःतथाचाव्याप्त्यभावातिव्याप्त्यभावा
संभवोभावेत्यभावत्रयविशिष्टधर्मस्यैव लक्षणत्वेसिद्धेता
दृशशृङ्गित्वस्याभावद्वयवत्त्वेपि विशिष्यदूपणत्रयनिष्ठप्र
तियोगिताकाभावविशिष्टधर्मवत्वा भावान्नातिव्याप्ति
प्रस्तधर्मे शृंगित्वे अतिव्याप्तिः ॥ तथाचेतादृशलक्षण
त्वेनाभिमतोयोभावत्रयविशिष्टोधर्मःस एवासाधारणधर्म
इत्युच्यते॥ ननु न साधारण. असाधारण इति व्युत्प
त्या साधारणभिन्नत्वं यदि असाधारणत्वमुच्येत ॥ तदा
निरुक्तादोपप्रसंगसंगतिभिया योगापहारिण्यारूढ्यापा
रिभाषिकं लक्ष्यतावच्छेदकसमनियतत्वमेवासाधारणत्वं
वक्तव्यम् ॥ तद्धि लक्ष्यतावच्छेदकव्याप्यत्वे सति ल
क्ष्यतावच्छेदकव्यापकत्वम् ॥ यथा गोः सास्न दिमत्व
विशिष्टशृङ्गित्वरूपासाधारणधर्मे लक्ष्यतावच्छेदकीभूत
गोत्वव्याप्यत्वे सति तद्व्यापकत्वसत्त्वेन लक्षणं समन्वे
ति ॥ तथा प्रकृतेपि इदं लक्षणं यथायथंसङ्गमनीयम् ॥
इदमेव लक्षणलक्षणत्वेन व्यवन्हीयते ॥ एतस्य लक्ष्य
मपि द्विविधं व्यावर्तकं व्यावहारिकं चेति ॥ तत्र यदि

व्यावर्तकस्यैलक्षणलक्ष्यत्वे व्यावृत्तिभिन्नत्वे सति अभिधेयभिन्नत्वं तादृशलक्षणलक्षणेनिवेशनीयम् ॥ व्यवहारस्य लक्षणप्रयोजनत्वे तु नदेयम् ॥ व्यावृत्तेरपि व्यवहारसाधकत्वात् ॥ वस्तुतस्तु वेदत्वजातिमत्वमेव वेदसामान्यलक्षणं लाघवात् ॥ तत्र यदि लक्षणलक्ष्यतावच्छेदकयोरैक्यात् सिद्धसाधनमुच्येत ॥ तन्न संघटते कथमिति चेदुच्यते ॥ लक्ष्ये लक्षणेन इतरभेदे साधिते सति हेतौ साध्यसामानाधिकरण्यनिश्चयेपिहेतुधर्मितावच्छेदकसाध्यप्रकारकनिश्चयस्यानियमात् न दोषः ॥ अथवा सिषाधेपाविरहविशिष्टसिध्यभावः पक्षतेतिवादिमते सिद्धिकालेपि सिषाधयिषयाऽनुमिति जननान्नसिद्धसाधनमित्याद्यवधेयम् ॥ तथाचोक्तलक्षण लक्षणलक्ष्यतावच्छेदकावच्छिन्ने वेदत्वावच्छिन्नेपारमार्थिकनित्यत्वेन ब्रह्माभेदसिद्धावेव विशिष्यततल्लक्षणलक्ष्येष्वपि तत्तद्वेदाभिधेयेषु तत्सिध्याप्रकृतशाखाविशिष्टः शुक्लयजुर्वेदः पारमार्थिकनित्यत्वेन ब्रह्मरूपइति सिद्धम् ॥

श्रीसद्गुरुरामशास्त्रिचरणरजोविरजीभूतजयरामात्मज जगन्नाथसूरिविरचितो माध्यन्दिनीयशाखाप्रकाशस्यद्वितीयांशः समाप्तः ॥ श्रीविश्वेश्वरार्पणमस्तु ॥

पश्यतीति श्रुतिबलेन संसारदशायामेव घटादीनामबा
धितत्वान्नोक्तदोषावकाश इति ॥ अत एवोक्तमित्यु
क्तेः ॥ देहात्मप्रत्ययोयावत्प्रामाण्यत्वेन कल्पितः ॥
लौकिकं तद्वदेवेदं प्रमाणं त्वात्मनिश्चयादिति ॥ तथा
चैतादृशप्रमाकरणत्वावच्छिन्नं प्रमाणं एक विधमपि अ
वांतरधर्मभेदेनानेकविधतामापन्नं भवति ॥ तद्यथा
प्रत्यक्षमेकं चार्वाकाः प्रत्यक्षानुमाने इति कणादसुगतम
तीयाः ॥ शब्देन सहितानि तानित्रीणीतिसांख्याः ॥ प्र
त्यक्षानुमानोपमानशब्दाःइति नैय्यायिकाः ॥ अर्थापत्त्या
सहितानि पंचेतिप्राभाकराः ॥ तानि अनुपलब्ध्यासहष
डितिवेदांतसिद्धांतिनः ॥ एवं च प्रत्यक्षानुमानोपमाना
गमार्थापत्ति अनुपलब्धिसंज्ञकानिषट् प्रमाणानिवेदांत
विदामेवमते इति सिद्धं ॥ एतेषुसर्वेषामेव मुख्यत्वमु
तान्यतमस्यैवेति ॥ तत्रनाद्यः॥ मुख्यामुख्यत्वलोपः स्या
त् ॥ नापिद्वितीयः विनिगमनाविरहात् ननुपूर्वभावित्व
रूपविनिगमकसद्भावेनादिमस्य प्रत्यक्षस्यैव मुख्यत्वमि
तिचेन्न ॥ प्रातिभासिकस्थले पूर्वभाविनः अरोप्यप्रत्य
क्षस्यानंतरभाविनाअधिष्ठानप्रत्यक्षेणबाधदर्शनात् ॥
एवं व्यावहारिकस्थलेपि पूर्वभाविनः प्रतियोगिप्रत्यक्ष

स्यानंतरभाविना अभावप्रत्यक्षेण बाधात् ॥ तथैवपार
मार्थिकस्थले महावाक्यजन्य निर्विकल्पकप्रत्यक्षेण
पूर्वभाविसविकल्पक प्रत्यक्षस्य बाधस्तुव्यक्त एव ॥
न च प्रत्यक्षमेवागमबाधकमास्तामिति वाच्यं ॥ तथा
सतिसुगतमतीयवत् देहाद्यात्मवादः प्रसज्जेत ॥ इष्टाप
त्तौतुदेहाद्यन्यात्म बोधकाः अथायमशरीरेत्याद्यागम
निवहाः व्याकुप्येरन् ॥ एवं चादिमप्रत्यक्षस्य पूर्वभा
वित्वं न मुख्यत्वप्रयोजकं ॥ ननु सर्वोपजीव्यत्वमेवत
स्यमुख्यत्वप्रयोजकं वदामः इतिचेन्न ॥ व्यावहारिक
स्थलेदशमस्त्व मसिव्याधवर्धितराजकुमार एव मादि
वाक्यानामपिसर्वतः पातितयाप्रत्यक्षोपजीव्यत्वा दर्श
नात् ॥ प्रत्युत तादृशस्थले वाक्योपजीव्यत्वमेव प्रत्य
क्षस्येदृश्यते ॥ वस्तुतस्तु व्यावहारिकागमज्ञानोत्पत्तौ
वृद्धव्यवहारादिशक्ति ग्रहद्वाराप्रत्यक्षस्य उपजीव्यत्वे
पि निर्दुष्टस्वतः प्रमाणीभूता पौरुषेयागमजन्मतात्त्वि
कज्ञानं प्रति तु नपौरुषेय भ्रमप्रमादादिपंककलंकितप्र
त्यक्षाद्युपजीव्यत्व मित्यवधेयम् ॥ तथाचतादृशप्रत्य
क्षस्य सर्वोपजीव्यत्वेन मुख्यत्वमिति वदतांमतस्यदत्त
तिलांजलिकतया पारमार्थिकागमज्ञानोत्पत्तिम्प्रतिस्व

स्वतःप्रमाणरूपाय वेदवेद्यायब्राह्मणे ॥ सच्चिदा नन्दरूपाय गणपायनतिर्मम ॥ १ ॥ प्रामाण्यंकिलवेद स्य स्वतोवापरतोपिच ॥ तदन्येषाम्पुनस्तत्तु यथाकि ञ्चिद्विविच्यते ॥ २ ॥ तृतीयोयं प्रमाणाख्यो वस्तुप्रा माण्यबोधकः ॥ माध्यन्दिनीयशाखायाः प्रकांशाशोवि रच्यते ॥ ३ ॥ अथलक्षणप्रमाणाभ्यामेव वस्तुसिद्धिरि ति नियमतोप्युक्तरीत्या लक्षणेन प्रकृतवस्तुसिद्धावपि प्रमाणेन वस्तुसाधनधियो हि प्रामाण्याधीनत्वात् प्रामा ण्यविचारोप्यावश्यकः ॥ तस्य प्रकृतशाखामात्रानुप्रा हले अप्रकृतशाखानामप्रामाणिकत्वापत्या वेदत्वावच्छि न्नस्य प्रामाण्यभंगप्रसंगस्यादिति समष्टि प्रामाण्यवि चारस्य व्यष्टिप्रामाण्यनिश्चायकतया प्रकृतशाखाप्रामा ण्यस्य सुलभतयालाभेन उपोद्घातसंगत्या पूर्वं वेद त्वावच्छिन्ने एव प्रामाण्यं विविच्यते ॥ तत्र किं तत् प्रामाण्यमिति चेदुच्यते ॥ प्रमाकरणत्वमेव प्रमाणत्वं॥ तत्र चक्षुःसन्निकर्षादावतिव्याप्तिवारणायकरणलक्षण कुक्षौ व्यापारवत्वमपि निवेशनीयम् ॥ प्रमात्वन्तु अ नधिगताऽबाधितार्थविषयकज्ञानत्वम् ॥ तथा चायं घ टइतिप्रमायां अनधिगतो अननुभूतो अबाधितो बाधशू

न्योयो घटरूपोर्थस्तद्विषयत्वाल्लक्षणसमन्वयः ॥ तत्र स्मृतावति व्याप्तिवारकमनधिगतेति ॥ शुक्तिरजतादावतिव्याप्तिवारकमबाधितेति ॥ चक्षुरादावतिव्याप्तिवारकं ज्ञानेति बोध्यम् ॥ अत्र यद्यपि धाराबाहिकबुद्धिस्थले नीरूपरूपप्रत्यक्षवत् ॥ नीरूपस्यापि कालस्यप्रत्यक्षविषयत्वमुरीकृत्य पूर्वक्षणवृत्तित्वविशिष्टघटः उत्तरक्षणेनास्ति इत्यनयारीत्याज्ञानभेदेपि नाव्याप्तिस्तथापि गगनेयंबलाकेति प्रतीतिबलात् गगनवृत्तिवलाकाप्रत्यक्षेण गगनस्यापि प्रत्यक्षत्वापत्तिभियाकालस्याऽप्रत्यक्षत्वमेव युक्तं रूपाभावात्॥ द्रव्यचाक्षुषप्रमायां रूपादेः कारणत्वाच्च ॥ गुणेगुणानङ्गीकारेणरूपचक्षुषं प्रतिरूपान्तरानपेक्षणात् रूपचाक्षुषोपपत्तिः॥ निरुक्ताव्याप्तिवारणार्थं तु तादृशस्थले विषयाभेदेन ज्ञानैक्यमेववाच्यम् ॥ तथा च तादृशविषयाकारान्तःकरणवृत्तैक्यात् वृत्तेः स्वविरोधिवृत्युत्पत्तिपर्यन्तस्थायित्वनियमान्नाव्याप्तिलेशावकाशोपीत्यवधेयम् ॥ ननु यत्रत्वस्य सर्वमात्मैवाभूत् तत्केनकम्पश्येदित्यादि श्रुत्या ब्रह्मभिन्नस्य बाधितत्वात् ॥ तदबाधितपदमसम्भवीति चेदुच्यते ॥ यत्र हि द्वैतमिव भवति तदितर इतरं

स्यैवप्रमाणत्वरूपविनिगमकस्यजागरूकतयाचआगम
स्यैव सर्वेषु तेषु मुख्यत्वं प्रतिफलितं ॥ ननु वेदस्य
पुरुषोच्चरितत्वेन पौरुषेयतया प्रत्यक्षादिवत् परतःप्रा
माण्यमिति वदन्तस्तस्य स्वतः प्रामाण्याभावशंकांपुन
रंकुरयंति केचन ॥ सापि निरुक्तश्रुतिसंमतत्वा तादृश
निरस्तत्वव्यापकापौरुषेयत्वोक्त्या च पुनः स्वतः प्रामाण्ये
न व्युदसनीयैव ॥ अतएवोक्तं सूतसंहितागतसूतगीता
याम् ॥ श्रुतिः सनातनोशम्भोरभिव्यक्ता न संशयः॥ शं
करेण प्रणीतेति प्रवदन्त्यपरेजनाः ॥ १ ॥ स्वतः प्रमा
णभूतैव तदामानवतीवसा ॥ स्वतश्च परतो दोषो ना
स्तियस्मात् द्विजर्षभाः ॥ २ ॥ स्वतो दोषो न वेदस्य
विद्यते सूक्ष्मदर्शने ॥ अस्ति चेद्व्यवहारस्य लोप एव
प्रसज्यते ॥ ३ ॥ परतश्च न दोषोस्ति परस्या भावतो
द्विजाः ॥ स्वतो दुष्टोपि शब्दस्तु मानमेवान्यसंगमात्
॥ ४ ॥ इति वार्ताविवार्तेव मुनीन्द्राः सूक्ष्मदर्शने ॥
स्वतो दुष्टः कथं मानं भवत्येन्यस्य संगमात् ॥ ५ ॥
यत्सम्बन्धेन यो भावो यस्य प्राज्ञाः प्रसिध्यति ॥ स
तस्य भ्रान्तिरेवस्यान्न स्वभावः कथं च न ॥ ६ ॥ ज
पाकुसुमलौहित्यं विभातिस्फटिकेभ्रशम् ॥ तथापितस्य

लौहित्यं भ्रान्तिरेव न वास्तवम् ॥ ७ ॥ वन्हिपाकजलौहित्यमिष्टकायां न वास्तवम् ॥ लौहित्यं तैजसांशस्तुनेष्टकायानिरुपणे ॥ अन्यस्यान्यधर्मस्तुप्रतीतौविभ्रमोमतः ॥ इत्यादि ॥ एवंचापौरुपेयत्वेन सनातनतयापि श्रुतेः स्वतः प्रामाण्यमित्यवधेयम् । ननु तस्याः स्वतः प्रामाण्यं व्यावहारिकमुतपारमार्थिकं वा समर्थ्यते ॥ तत्रानाद्यः ॥ व्यवहारस्य मिथ्यात्वेन तत् प्रामाण्यस्यापि मिथ्यात्वापत्तिः ॥ नापिद्वितीयः ॥ तस्य पारमार्थिकत्वेद्वैतप्रसक्त्या अद्वैतमतभंगप्रसङ्गः स्यादिति चेन्न ॥ पारमार्थिकज्ञानजनकत्वेन साक्षाद्ब्रह्माभिन्नतया च पारमार्थिकमेव तदित्युच्यते ॥ ननु सर्वेषां प्रामाण्यादिव्यवहाराणामविद्यावत्प्रमातृविषयत्वेन कथं तस्य परमार्थिकत्वं ॥ अत एवोक्तं शारिरकभाष्यकारैर ध्यासप्रमाणभाष्ये ॥ तमेतमविद्याख्यमात्मानात्मवोरितरेध्यासं पुरस्कृत्यसर्वे प्रमाण प्रमेय व्यवहाराः लौकिकावैदिकाश्चप्रवृत्ताः सर्वाणि च शास्त्राणि विधिप्रतिपेधमोक्षपराणि इति ॥ व्याख्यानं ॥ लौकिकः कर्मशास्त्रीयो मोक्षशास्त्री यश्चेति त्रिविधो व्यवहारः प्रवर्ततेइत्यर्थः ॥ तत्र विधिनिपेधपराणि क

मेंशास्त्राणि ऋग्वेदादीनि ॥ विधिनिषेधशून्यानि प्रत्य
क्ब्रह्मपराणि वेदांत वाक्यानीतिविभागः ॥ भाष्यं ॥
कथं पुनरविद्यावद्विषयाणि प्रत्यक्षादीनिप्रमाणानि शा
स्त्राणिचेति ॥ उच्यते ॥ देहेंद्रियादिष्वहं ममाभिमा
नरहितस्य प्रमातृ त्वानुपपत्तौ प्रमाण प्रवृत्यनुपपत्तेः॥
इत्यादि ॥ व्याख्यानं ॥ अविद्यावद्विषयाणि कथं
प्रमाणानिस्युः आश्रयदोषादप्रमाण्यापत्तेरित्याक्षेपः ॥
तत्र प्रमाण प्रश्नेव्यवहारार्था पत्तिलिंगकानुमानं चा
हउच्यते इत्यादिना तस्मादित्यं तेन भाष्येण ॥ तथा
च देवदत्तकर्तृको व्यवहारः तदीयदेहादिषु अहंममा
ध्यासमूलः तदन्वय व्यतिरेकानुसारित्वात् ॥ यदित्थं
ततथा यथामृन्मूलोघट इति प्रयोगः॥ तत्र व्यतिरेकं
दर्शयति ॥ देवदत्तस्य सुषुप्तौ अध्यासाभावे व्यवहारा
भावोदृष्टः ॥ जाग्रत्स्वप्नयोःअध्यासेसतिव्यवहारः इत्य
न्वयःस्फुटत्वान्नोक्तः॥ अनेनलिंगेनकारणतया अध्यासः
सिध्यति ॥ व्यवहारकार्यानुपपत्त्यावेतिभावः ॥ सः किं
अनात्मनः आत्मनि वात्मनः आत्मनिअहो स्वित्परस्प
रंवेति ॥ तत्रनाद्यः ॥ अध्यासेहिज्ञातसामान्य धर्मव
त्त्वं अज्ञातविशेषत्वं अधिष्ठानावरणं आरोप्याधिष्ठा

नयोः सादृश्यं अधिष्ठानरोप्ययोर्भेदाग्रहः दोष साम
ग्रीचापेक्षते ॥ न चैतेनिर्धर्मके आत्मनिसंति ॥ अतस्त
स्यनिः सामान्यविशेषत्वेन सर्वदाभासनानत्वेन च प
रं सादृश्यादिरहितत्वे न च अधिष्ठानत्वासंभवात् ॥
नापिद्वितीयः॥ तस्यमिथ्यात्वाभ्युपगमात्॥ मिथ्यावस्तु
नोऽधिष्ठात्वेशून्यवादप्रसंगाच्च ॥ यदितस्यसत्यत्वेतु
तदनिवृत्ते रनिर्मोक्षस्व प्रसंगात् ॥ न हि सत्यं निवर्त
ते निवर्त्यमानं वज्ञानेनेति ॥ दृश्यत्वादिनाशुक्तिरज
तादिवन्मिथ्यात्वानुमानाञ्च ॥ तद्यथाप्रपंचोमिथ्यादृ
श्यत्वात्शुक्तिरजतादिवत् इत्यनुमानादित्यर्थः ॥ नेह
नानास्तिकं च न अतोन्यदार्तमित्याद्यागमसंदोहाअ
पि साक्षादेवतस्य मिथ्यात्मवगमयन्ति॥ किं च सन्
घट इति वत् आत्मनिकल्पितत्वेन नासरूपात्मकदेहा
दौअनात्मनिवस्तुत्वेन सिद्धे एव तत्र आत्मनः इदम
शस्ये वसंसृष्टत्वरूपेणा ध्यासोवाच्यः ॥ एवं चेदात्मा
श्रयादिदोषप्रसंगश्च ॥ तथा हि आत्मनि अनात्मध्या
सः आत्माध्यासाधिष्ठान स्यानात्मनः साधकः सर्वाध्या
समूलकत्वादनात्मनः ॥ अध्यासस्य च सादृश्यादिमूल
कत्वात् ॥ सादृश्यादेश्चानात्माध्यासमूलकत्वादिति

कत्वमित्यवधेयम् ॥ अत एवोक्तं प्रतिज्ञाभाष्ये शांकर भाष्यकारैरपि ॥ एवमयमनादिरनंतोनैसर्गिको ध्यासो मिथ्याप्रत्ययरूपः कर्तृत्वभोक्तृत्व प्रवर्तकः सर्वलोकप्रत्य क्षोऽस्यानर्थहेतोः प्रहाणायात्मैकत्वविद्याप्रतिपत्तये स र्वेवेदान्ता आरभ्यन्ते इति ॥ तथा तादृशात्मज्ञानात् पूर्वं तस्याविद्याविषयत्वेपि तदुत्तरं तु तस्या किं चित् करत्वमपि भाष्यकारैरेवोक्तम् ॥ शास्त्रीये तु व्यवहारे यद्यपि बुद्धिपूर्वकारीनाविदित्वात्मनः परलोकसम्बन्धम धिक्रियते ॥ तथापि न वेदान्तवेद्यमशनायाद्यतीतमपे त ब्रह्मक्षत्रादिभेदमसंसार्यात्मतत्वमधिकारेऽपक्षते अ नुपयोगादधिकारविरोधाच्च ॥ प्राक् तथा भूतात्मवि ज्ञानात् प्रवर्तमानं शास्त्रमविद्याविषयत्वं नाति वर्तते ॥ तथा हि ब्राह्मणो यजेतेत्यादीनि शास्त्राणि आत्मनि वर्णाश्रमवयोवस्थादि विशेषाध्यासमाश्रित्य प्रवर्तंते इति ॥ व्याख्यानेतु ब्राह्मणोयजेत न हर्वेस्नात्वा भिक्षे त ॥ अष्टवर्षं ब्राह्मणमुपनयीत ॥ कृष्णकेशोग्नी नाद धीत॥इत्याद्यागमो ब्राह्मणादि पदैरधिकारिणं वर्णाद्य भिमानिन मनुवदन् अध्यासं गमयतीति भावः ॥ त थो चोक्तरीत्या प्रत्यक्षाद्यखिल प्रमाणेषु .अगमस्यैव

नित्यत्वेन पारमार्थिकं स्वतः प्रामाण्यमिति सिद्धं ॥ ननु शब्दस्यतृतीयक्षण वृत्तिध्वंस प्रतियोगित्वेन पौरुषेयत्वेनाप्यनित्यतया परतः प्रामाण्यमेवास्तामिति चेन्न ॥ शारीरक सूत्रकार भाष्यकाराद्यसंमतत्वात् ॥ तथाहि ॥ अत एव च नित्यत्वमिति वैय्यासकसूत्रं ॥ शांकरभाष्यतुस्वतंत्रस्य कर्तुरस्मरणादिभिः स्थितेवेदस्य नित्यत्वेदेवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशंक्य अतः प्रभवादितिपरिहृत्य इदानीं तदेव वेद नित्यत्वंस्थितं दृढयति अत एव नित्यत्वमिति ॥ अत एव नियताकृतेर्देवादेर्जगतोवेद शब्दप्रभवत्वाद्वेदशब्द नित्यत्वमपि प्रत्येतव्यं ॥ तथा च मंत्र वर्णः यज्ञे न वाचः पदवी मायत्ता मन्वविंदन् ऋषिषु प्रविष्टामिति स्थितामेव वाचमनु विन्नां दर्शयति ॥ वेदव्यासश्चैवमेव स्मरति ॥ युगांतेहितान्वेदान् सेतिहासान् महर्षयः ॥ लेभिरेतपसापूर्वं मनुज्ञातास्वयंभुवा इति ॥ एवं चागमस्य पारमार्थिकमेव नित्यत्वमितिसूत्रभाष्यकृतांपरमाकूतमाविर्भवतीतिफलितं ॥ ननु वियदादिप्रपंचवत्प्रवाहनित्यत्वमेव वेदस्यापि न पारमार्थिकमिति चेदुच्यते ॥ वियदादिप्रपंचस्य तु व्या

स्वाध्यासेस्वस्यापेक्षया आत्मश्रयः ॥ अन्यकल्पने पर
स्परापेक्षाअतअन्योन्याश्रयः ॥ तदन्य कल्पनेतुत्रयाणां
परस्परापेक्षयाचक्रकं ॥ तन्नाप्यकल्पने अनवस्था
इत्याशयेयं ॥ इति चेदुच्यते ॥ एव मेषामायास्व
व्यतिरिक्तानिपरिपूर्णानिक्षेत्राणि दर्शयित्वाजीवेशावा
भासेनकरोति ॥ माया च विद्या च स्वयमेव भवति ॥
भूयश्चांते विश्वमाया निवृत्तिरित्यादि श्रुतिभ्यः ॥ मा
या अविद्या यातदेवतलज्ञाननिवर्त्य मज्ञानं इदमेव
स्वपराध्यासे कारणं तच्चानादितेन पूर्वं सादृश्यारो
पः ॥ ततः स्वस्मिन्नत्वेसति स्वाभेदेन प्रतीयमानस्व
रूपतादात्म्यारोपः ॥ तथाचाध्यासिकसंबंधेन अधिष्ठान
योग्येमात्मनि अनात्मनः स्वरूपतः संसर्गतोप्यध्यासः॥
आत्मनस्तु संसर्गत एवाध्यासः ॥ किं चाज्ञानस्या ना
दित्वेन कारणस्यानपेक्षणात्नोक्तात्माश्रयादिदोषलेशा
वकाशोपीत्यवधेयं ॥ एवं चाध्यासोपादानाज्ञानस्य ना
दित्वेना ध्यासस्याप्यनादित्वं॥ अतएव पूर्वपूर्वाध्यासाहि
त संस्कारस्यो तरोत्तराध्याससेतुत्वेन आत्मन्यपि तद
धिष्ठानयोग्यत्वात्परस्परमध्यासः संभवतीति सिद्धं ॥
एवं चेतादृशाध्या संप्रतिवार्तिककारसंमतिरप्यस्ति ॥

तथाहि ॥ वित्तात्पुत्रः प्रियः पुत्रात्पिंडः पिंडातथेंद्रियं॥ इंद्रियेभ्यः प्रियः प्राणः प्राणा दात्माप्रियः परः इति ॥ प्रियः सुखसाधनेच्छाविषयः ॥ एवं चोत्तरोत्तरं प्रियत्वाधिक्येपि तत्प्रकर्षस्यात्मन्येव पर्यवसानान्निरतिशयप्रियत्वमात्मन्येवेतिसिद्धं॥ तथा च परस्परमेवाध्यासो वक्तव्यः॥ एकतरस्याध्यासांगीकारे अन्यतरस्या भानप्रसङ्गात् ॥ अध्यस्तस्यैव भ्रमे भाननियमात् ॥ चिदचिद्ग्रन्थिरूपोऽध्यास इति ॥ चिदचितोःपरस्परावच्छेदेन परस्पर सम्बन्धरूप इति बोध्यम् ॥ तथा च सर्वं व्यवहारमूलकाध्यासेनैव प्रमातरिसिद्धे तद्विषयाण्येव सर्वाणि प्रमाणानीत्युक्ते तादृशप्रामाण्यादिव्यवहारस्याविद्यावत्प्रमातृविषमतया कथं तस्य पारमार्थिकत्वमिति चेदुच्यते॥ अखिलश्रुतिशिखामुखीभूततत्वमस्यादि महावाक्यजन्य निर्विकल्पकाखण्डार्थाव बोधे सति अनाद्यविद्यानिवर्हणसमानकालीनैव विद्याविद्योतते ॥ तत एव साक्षात् ब्रह्मात्मैक्यसाक्षात्कारो भवति अयमेव परमार्थ इत्यभिधीयते ॥ एतादृशपरमार्थजनकत्वं तु प्रत्यक्षाद्यनपेक्षितत्वरूपस्वतस्त्व विशिष्टतत्वमस्यादिवेदान्तवाक्यप्रमाणानां सुलभतया लभ्यतेति इदमेव तस्य पारमार्थि

वहारिकमेव नित्यत्वं न पारमारमार्थिकंतस्य कल्पित
त्वेन मिथ्यात्वात् ॥ यदि अनेनैवहेतु नावेदस्यापि वि
यदादिवदेव नित्यत्वमुच्येत ॥ तर्हिजीवब्रह्मैक्यप्रति
पादकानामपि साक्षात्परं परयावा ब्रह्मप्रतिपादकाना
मखिलश्रुतिशिखामुखीभूतानां यावदुपनिषदांमिथ्यात्वे
न तत्प्रतिपाद्यार्थस्यापि तथात्वेवेदांतशास्त्रवैयर्थ्य
मापद्येत ॥ निर्मोक्षताप्रसंगश्च ॥ इत्यपत्तौ तु त्रयोवे
दस्य कर्तारोमुनि भंडनिशाचरः ॥ किं च धूर्तप्रलपितं
वेद इति वदतां विवदतामप्यर्वाचीनानां चार्वाकादीत
मतांप्रवेशःस्यात् ॥ इष्टमपिइष्टाचेत् ॥ गणेशंक्रीयमा
णस्तुरचयामासवानमित्यादिवत् अनर्थांतरतामेव पर्य
वश्यति ॥ अतोऽवश्यंप्रेक्षकरीत्यावेदत्वावच्छिन्नस्य पा
रमार्थिकमेव नित्यत्वंयत्तदेवक्तव्यं ॥ केचित्तु वेदस्य पा
रमार्थिकनित्यत्वे अद्वैतमत भंगप्रसंगः स्यादिति शं
कामंकुरयंति ॥ तेतुएवं प्रत्याख्यातव्याः ॥ अनेनात्म
नानुप्रविश्यनामरूपे व्याकरवाणीयाः अगमनिबहाः
जीवस्यपारमार्थिकानित्यत्वं यथा अवबोधयंति ॥ तथा
वाचाविरूपनित्यया इत्याद्यगम संदोहा अपि साक्षा
देवागमस्य तात्विकं नित्यत्वमवगमयंति न तस्य

ब्रह्माभिन्नतयानाद्वैतसिद्धांतभंग इति ॥ ननु यत्पयं त्यभिसंविशंति ॥ सदेव सौम्येदमग्रआसीदिति श्रुति संहतयोपिवियदादिप्रपंचस्यसद्रूपतयाब्रह्माभेदेन ता त्विकमेव नित्यत्व वदंति इति चेदुच्यते ॥ त्रैकालिकनि षेधप्रतियोगिनः वियदादेस्त्रिकालाबाध्येन सता अभेद स्तुनवास्तवः॥किं तु मिथ्यात्वेनाध्यस्त एव॥भेदस्तु वा वास्तवः तस्याधिकरणात्मकत्वात् ॥ एवं जीवस्यतु ते नात्मनानुप्रविश्येत्यादिश्रुत्यासदभेदएवास्तवः भेदस्त्वौ पाधिकः कल्पितत्वात् ॥ अत एव स्वाभिन्नत्वेसतिस्वा भेदेनप्रतीयमानत्वं जगतादात्म्यं ॥ जीवतादात्म्यंतु स्वाभिन्नत्वेसति स्वभेदेनप्रतीयमानत्वं ॥ इदमेवतादा त्म्यं जीववद्वेदेपिसम्यक् संगच्छतीतितस्यपारमार्थिक मेव नित्यत्वंसिद्धं ॥ तथा च अत एव स्वतत्रस्य क र्तुरस्मरणादेवहिस्थितेवेदस्यनित्यत्वे इति नह्य नित्या ज्जगदुत्पत्तुमर्हतितस्यापि उत्पत्तिमत्त्वेन सापेक्षत्वा त् ॥ तस्मान्नित्योवेदोजगदुत्पत्तिहेतुत्वादीश्वरवदिति सिद्धमेवनित्यत्वमनेन दृढीकृतमिति निरुक्तसूत्रभाष्यं व्याकुर्वाणानांवाचस्पतिमिश्राणामपि संमत्यात्तन्निर्बंधं दृ ढतरतामापन्नं भवति ॥ किं च सर्वेवेदायत्रैकंभवंतिइ

त्याद्याश्रुतिततयोपिपरमनुकूलतयैवविलसंति इतिबो ध्यं॥नतावदेतावदेवाविनिगमकं किंतु स्वतंत्रंजैमिनीयं तंत्रमपि तन्नित्यत्वाभ्युपगंतृयथाप्रकृतोपयुक्तं तयोपो द्घातसंगत्याऽस्ति संक्षिप्यैवोच्यते ॥ तत्रतावज्जैमि निमुनिवर्यः परमकारुणिकतयाकर्मश्रद्धालूनांहितायपूर्व कांडीयश्रुतिगणमणीनांहाराकाराद्वादशाध्यायी यथोक्तोप युक्तसूत्रैर्विरचयामास॥तत्रअथातोधर्मजिज्ञासेतिआदिमं सूत्रं॥अत्राथशब्दःवेदाध्ययनानन्तर्यं वचनः ॥ अतः श ब्दस्तु तदध्ययनदृष्टार्थतामाचष्टे॥कथमितिचेदुच्य ते॥अस्य धर्मविचारतन्त्रस्यारम्भोअध्ययनविधिप्रयोज्य एवेति सिद्धान्तः॥ तादृशविधौ तदध्ययनस्य तदर्थज्ञा नपर्यवसायित्वन्दरी दृश्यते॥ तथा हि॥ स्वाध्यायोऽध्ये तव्यइत्यत्र तव्यप्रत्ययः शाब्दीभावनामभिधत्ते ॥ सा च स्वभाव्यमन्तराअनुपपन्ना सति किं चिद्भाव्यं कल्प यति ॥ तत्र चैकप्रत्ययोपात्तत्वेतार्थीभावनैव भाव्यत्वे नान्वेति ॥ सापि स्वभाव्यं विना अनुपपन्ना सति किं चिद्भाव्यमाक्षिपति ॥ तत्रापि फलपदस्याश्रवणात्तत्स मभिव्याहृतः स्वाधायः कर्मभूत एव भाव्यत्वेन सम्बध्य ते॥ तस्य च फलवदर्थावबोधपर्यन्तत्वाभावेभाव्यत्वानुप-

पत्याफलवदर्थावबोधपर्यन्तावसायित्वमापतति॥अर्थनि र्णयमन्तरेण च फलवदर्थावबोध्यस्यासम्भवेनार्थनिर्ण यहेतुविचारकर्तव्यतामध्ययनविधिराक्षिपतीति ॥ अर्थ ज्ञानरूपदृष्टप्रयोजनायैव वेदाध्ययनं विधीयतेति सिद्ध म् ॥ ननु यद्दचोधीते पयसः कुल्या अस्य पितृना वह न्ति इत्यार्थवादिकं श्रुतमेव फलमिति चेन्न ॥ तस्य नित्यतया अध्ययनविधिफलत्वेन प्रथमाध्ययनविधिफ लत्वाभावात् ॥ किं चाध्ययनव्यापारस्य संभवत्यर्थ ज्ञानरूपदृष्टफलकत्वे अदृष्टफलकत्वानुपपत्तेः ॥ तथा चोक्तं लभ्यमाने फलेदृष्टे नादृष्टफलकल्पनेति ॥ तथा च तदर्थज्ञानरूपदृष्टफलवाचकएवातः शब्द इतिसि द्धम् ॥ एवं च वेदस्याध्ययनं यतोऽर्थज्ञानरूपदृष्टार्थ कमतः हेतोर्वेदाध्ययनानन्तरं वेदार्थस्य धर्मस्य पदार्थनिर्णयविचारः कर्तव्य इति यथा श्रुतः सोत्रोर्थः सम्पद्यते ॥ अथ धर्मविचारो हि तत्स्वरूपादिज्ञानम न्तरा अनुपपन्न इति चेदुच्यते ॥ धर्म इत्यत्र धारणा र्थकात् धृधातोः कर्तर्यौणादिकमन्प्रत्ययेन व्युत्पा दितो धर्मशब्दः पंकजादिशब्दवद्योगरूढ एव ॥ त था च पततोजनानामाश्रयो भूत्वाधरतीतिधर्मशब्दस्य

योगार्थः ॥ रूढ्यर्थस्तु अनिष्टा ननुबन्धिइष्टफलसाध नमित्याकारकः ॥ एवं चानिष्टपरिहारपूर्वकेष्टफललाभ स्तु भवतियेनानुष्ठीयमानेनेति सिद्धम् ॥ स च धर्मोया गादिः स च स्वर्गकामोयजेतेति वैधप्रमाणेन स्वर्गमु द्दिश्य पुरुषम्प्रति विधीयते ॥ तत्र यद्यपि प्रत्यक्षादी नां यथा धर्मेण प्रामाण्यम् ॥ तथा विधिवाक्यस्यापि तत्र प्रामाण्येन सम्भवति यथा शक्तिग्रहणपूर्वकं लोके ह्याप्तवाक्यस्य प्रामाण्यं दृष्टम् ॥ शक्तिश्च लोकप्रसि द्धे गवादौ दृश्यते तादृशधर्मस्य तु अलौकिकत्वात् त त्र शक्तिग्रहो न संघटते ॥ शक्तिग्रहणमन्तरेण डुम्फ टादिशब्दवच्चोदनावाक्यस्यापि न तत्र प्रामाण्यम्॥ तथापि प्रभिन्नकमलोदरेमधुनिमधुकरः पिबति इत्यत्र यथा मधुकरपदस्यार्थमजानन् पुमान् तदन्यपदार्थांश्च जानन् तत्समभिव्याहारेण कमलमध्यगते मधुपानं कुर्वति भ्रमरे मधुकरपदस्य शक्तिं ग्रहित्वा वाक्यार्थं प्रतिपद्यते ॥ तथाकारीयो वृष्ठिकामोयजेतेत्यादौ लोक प्रसिद्धार्थवृक्षादिपदसमभिव्याहारात् अलौकिकेपिभा वनापदार्थे चोदनायाः संगतिं ग्रहित्वा तद्वाक्यार्थम्प्र तिपद्यतेइति धर्मबोधकत्वाच्चोदनैव धर्मेण प्रमाणमि

स्यवधेयम् ॥ अबाधिताज्ञातार्थ ज्ञापकत्वं हि स्वतः प्रामाण्यमत्र न तु परतः ॥ अपौरुषेयत्वात् ॥ अपौरुषयत्वं तु लक्षणांशे सुचिरंविविच्य रुचिरमवोचमेव ॥ इदानीमस्मिन् प्रमाणांशे तु तस्य स्वतः प्रामाण्यविवरणमेव विधीयते इत्यवधेयम् ॥ ननु स्वर्गकामोयजेतेत्यादौ साधनवाचकशब्दस्यादर्शनात् कथं तादृशवेधवचसायागस्य स्वर्गसाधनत्वेनानुष्ठेयत्वम्प्रतिपाद्यते इति चेदुच्यते ॥ यजेतेत्यत्रास्त्यंशद्वयं यजिधातुः तत्रत्यश्च ॥ प्रत्ययेप्यस्त्यंशद्वयं आख्यातत्वं लिङ्त्वंच ॥ तत्रांशद्वयवाच्याभावनैवोच्यते ॥ भावनानामभवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः ॥ भवितुरुत्पद्यमानस्योत्पत्यनुकूलोभावयितुरुत्पादयितुःप्रयोजकस्य व्यापारविशेषोभावनेत्यर्थः ॥ प्रयोजकव्यापारत्वादेव णिजन्तेन भावनाशब्देनोच्यते ॥ यथा उत्पद्यमानस्योदनस्योत्पत्यनुकूलो देवदत्तस्यव्यापारविशेषोभावनेत्यर्थः ॥ यथा चोत्पद्यमानायाः देवदत्तप्रवृत्तेरुत्पत्यनुकूलो प्रवर्तकस्य चैत्रस्याभिप्रायविशेषः ॥ यथावायजेतस्वर्गकामइत्यत्रोत्पद्यमानस्यधात्वर्थस्य स्वर्गस्योत्पत्यनुकूलः स्वर्गकामस्य व्यापारः ॥ उत्पद्यमाना

याश्च स्वर्गकामप्रवृत्तेरुत्पत्त्यनुकूलो लिङादिव्यापारविशेषः ॥ तथा चान्योत्पदनानुकूलोभावकस्य व्यापारविशेषोधात्वर्थादन्यः सर्वधात्वर्थ सम्बन्धाकारेण भासमानो भावनासामान्यमिति सिद्धम् ॥ तथा चोक्तमभियुक्तैः ॥ अन्योन्यादनुकूलात्माभावनासाध्यरूपिणिइति ॥ तथैवाचार्यै रप्युक्तम् ॥ धात्वर्थव्यतिरेकेण यद्यप्येषा न लभ्यते ॥ तथापि सर्वसामान्यरूपेणैवावगम्यते इति ॥ सा भावनाद्विविधा शाब्दी अर्थी चेति ॥ तत्र तावत् शाब्दीभावना विधिरिति भट्टाः ॥ नियोगो विधिरिति प्राभाकराः ॥ उभयथापि अप्राप्तार्थ विषयकप्रवर्तनाबोधकत्वं विधिर्न जहाति ॥ यतः स्वर्गकामोयजेतेति विधिवाक्यं यागादिकरणकस्वर्गादिफलकभावनायां स्वर्गादिहेतुकयागादिगोचरनियोगे वा पुरुषं प्रवर्तयदेवावबोधयति ॥ एवं च यजेतेत्यत्राख्यातस्यभावयेदित्यर्थो भवति ॥ ततश्च किं भावयेत् केन भावयेत् कथं भावयेदिति भाव्यस्य करणस्य इति कर्तव्यताख्या कांक्षायां स्वर्ग भावयेत् यागेन भावयेदग्न्यान्वाधानप्रयाजावघातादिभिरुपकारं सम्पाद्य भावयेदित्येवं भाव्यकरणेति कर्तव्यतासमर्पणेनाकांक्षापूरणात्

प्रकरणाम्नातः सकलः शब्दसंदर्भोभावना वाचनआ
ख्यातस्यैवप्रपंचोऽतिरुचिरतयाविरीवर्तितराम् ॥ तस्यां
च भावनायांस्वर्गस्यभाव्यत्वं किंशब्दप्रयोगात्॥प्रकृ
त्यर्थस्य च करणत्वं तृतीयाश्रुत्यावगम्यते ॥ तथा च
श्रूयतेदर्शपौर्णमासाभ्यां स्वर्गकामोयजेतेति ॥ अत्रव
वधानप्रयाजादीनामिति कर्तव्यत्वं तु दर्शपौर्णमास
प्रकरणेसमाम्नानादवगम्यते ॥ सेयंसाध्यसाधनेति क
र्तव्यतारूपांशत्रयवती भावनाअर्थीत्युच्यते ॥ अथ शा
ब्दीभावनातुलिङ्प्रत्ययेनोप्यस्याप्यते ॥ यतोलिङ्लो
ट्तव्यप्रत्ययश्रवणोत्तरं अयंमांअनेनशब्देनास्मिन्नर्थेप्र
वर्तयतीति ॥ मत्प्रवर्तनाविषयकाभिप्राय वानयमि
ति च नियमेनप्रतीयते॥ सचाभिप्रायविशेषोलोकेत्रयो
क्तृपुरुषनिष्ठः ॥ वेदेतुपुरुषाभावाच्छब्दनिष्ठएवसः वेद
स्यनित्यत्वात् ॥ अत एव लिङादिभिरुपस्थापि तासा
शाब्दीतिव्यवह्रियते ॥ तस्याश्चभावनायाः पूर्वोक्तांशत्र
यवतीसर्वोप्ययं भावनासाध्याभवति ॥ साधनंतुलिङा
दिज्ञानमेव ॥ इतिकर्तव्यतां शास्त्रर्थवादवाक्यसंपा
दितास्तुतिः पूरयतीतिदिक् ॥ ननु स्वर्गकामोयजेते
त्यादिभिर्वाक्यैः स्वर्गादिफलसाधनत्वेन यागादिर्विध

वि विधीयते ॥ तथापिक्रियाकलापात्मकस्य तस्यक्ष
णिकत्वेन कालांतरभाविस्वर्गादिफलसाधत्वं कथंघट
ताम् ॥ नहिदग्धेन दंडेनघटोत्पादना संभवति ॥ इति
चेद्गाडं ॥ यागादेःक्षणिकत्वाद्यावत्फलोत्पत्ति पर्यंतमव
स्थानासंभवइति ॥ परंतुयागादिजनिताकाचिदपूर्वना
मधेयाशक्तिरस्तितैवावतिष्ठते इति ॥ तद्वारैवयागादेःस्व
र्गादिफलसाधनत्वमुपपद्यते ॥ न च शक्तिरूपस्यापूर्व
स्यकल्पनायां अव्यवहितस्यतस्यैवस्वर्गादिफलसाधन
त्वापत्त्यायागादेः स्वर्गादिफलसाधनत्व बोधकश्रुतिवा
क्यानिविरुध्येरन् इतिवाच्यं ॥ वन्हिनाघृतंप्रविलापया
मिइत्यादौकाळव्यवहितस्यापि वन्हेःसाधनत्वस्य संप्र
तिपन्नत्वात् ॥ किंचांगारजन्यमौष्ण्यंप्रशांतेष्वप्यंगा
रेषुयथाघृतेअनुवर्तते ॥ यथावाकालांतरभाविन्याः स्मृ
तेर्जनकोअनुभवाहितसंस्कारोऽनुभवकर्तर्यात्मनिअनुव
र्तते ॥ तथाकालांतरभाविस्वर्गादिफलजनन क्षमंयागा
दिभिरात्तमपूर्वं विनष्टेपि यागादौ तत्कर्तर्यात्मनिसं
म्यगनुवर्ततएवेति न काप्यनुपपत्तिः ॥ ननु तर्हिअ
पूर्वस्यैवधर्मत्वं न यागादेरितिचेत्सत्यं ॥ अपूर्वस्यैवध
र्मत्वमिति॥ तथा ष्यायुर्वै घृतमित्यादौ आयुःकारस्य घृ

तस्ययथाआयुः पदेन व्यवहारस्तथैव धर्मकारणस्यापि
यागादेर्धर्मपदेन व्यवहारोयुक्तएव किं च धर्माधर्माव
दृष्टं स्यात् धर्मः स्वर्गादिलक्षणः ॥ इत्यादिवचनतोपिध
र्मस्यादृष्टपदवाच्यत्वं सर्वसंमतमप्यपूर्वस्यैव मुख्यध
र्मत्वेसंगच्छते ॥ नत्वन्यथायागदानादेस्तेषांप्रत्यक्षत्वात्
अदृष्टपदशक्यत्वासंभवाच्च ॥ ननु अवश्यक्लृप्तयागध्वं
सेनैवफलंजायताम् अलंकल्पितेनापूर्वेणेति चेदुच्यते ॥
ध्वंसस्याधिकरण स्वरूपत्वेन नित्यतया स्वर्गस्यापि
नित्यत्वापत्तिः ॥ इष्टापत्तौतु क्षीणेपुण्ये मर्त्यलोकंविशं
तीत्यादिवचनानिव्याकुप्येरन् ॥ किंचांगध्वंसानांकारण
त्वंतथाअंगिध्वंसस्यापि कारणत्वेशारिरंगौरवमपिरया
त् ॥ सिद्धांतेतुअंगापूर्वसहकृतांग्यपूर्वस्यकारणत्वेलाघ
वमेव ॥ न च नित्यकर्मजन्या पूर्वस्यफलाजनकत्वेन
कथमपूर्वत्वावच्छिन्नस्य फलजनकत्वमितिवाच्यं ॥
अपूर्वं द्विविधं फलापूर्वमफलापूर्वं चेति ॥ तत्रैकं फल
जनकमपरं तदजनकमिदमेव पण्डापूर्वमपण्डापूर्वमि
त्यपि व्यपदिश्यते ति दिक् ॥ तथा चान्मायत्वावच्छि
न्नस्य नित्यत्वेन पारमार्थिकमेव स्वतः प्रामाण्यमित्य
वधेयम् ॥ अत एवान्मायस्य क्रियार्थत्वादानर्थक्यम

तदर्थानां तस्मादनित्यमुच्यते ॥ एतावत् पूर्वपक्षसूत्रम्
अस्यार्थः ॥ अस्मादस्य वेदस्य यज्ञादिक्रियाप्रतिपा
दनपरत्वादनर्थानामक्रियार्थानां वायुर्वै क्षेपिष्ठादेवता ॥
सोरोदीद्यदरोदीत्तदरुद्रस्य रुद्रत्वमित्येवमादीनांवाक्या
नां आनर्थक्यं निरर्थकत्वम् ॥ तस्मादनित्यमनियत
वेदस्य प्रामाण्यमुच्यते॥इति प्राप्ते सिद्धान्त सूत्रम् ॥
विधिनात्वेकवाक्यत्वादिति ॥ अथ प्रथमपादस्यतद्भूताधि
करणस्यसूत्रम् ॥ तद्भूतानां क्रियार्थेन समन्वयइति ॥
तत् तेषु भूतानां सिद्धार्थप्रतिपादकानां वाक्यानांक्रि
यार्थेन क्रियाप्रतिपादकेनवाक्येन वायव्यं श्वेतमाल
भेत ॥ बर्हिषिरजतन्न देयमित्यादिना समन्वयः ॥ त
था च विधिप्रत्यवायरहितवाक्यानां विध्यादिवाक्यैः स
न्निहितैरसन्निहितैर्वा प्राशंस्यनिंद्यत्वाद्यर्थपूरणेनान्व
येकृते सर्वस्य वेदस्य क्रियापरत्वसिध्या निरर्थकता नि
रासेन च स्वतः प्रामाण्यं सिद्धम् ॥ अन्यथा स्वाध्यायो
ध्येतव्येति नित्याध्ययनविधिपरिग्रहीतं वेदत्वावच्छि
न्नाध्ययनं बाध्येत ॥ निरर्थकाध्ययनस्य वैयर्थ्यात् ॥
अतस्तादृशार्थवादवाक्यानां विध्यादिपरत्वेन काप्यनु
पपत्तिरिति सिद्धम् ॥ बर्हिषिरजतन्नदेयं अत्रास्यात्रि

का ॥ अथ कदाचित् सुराः असुरैः सहयुद्धसन्नद्धाः स
न्तः परमविश्वासपात्रं वीतिहोत्रं मत्वा असुरभियानैजं
सर्वस्वं तस्मिन् संस्थाप्यासुरैः समरमारेभिरे ॥ ततो
जयमुद्घोष्यस्वस्वाधिकारानापेदिरे ॥ तदा अग्नेःनैजं
स्वं याचितवन्त यदातान् अग्निस्वाचमदीयमेवेदं न
मयादीयत इति ॥ तदा सर्वे सुरास्तंरुरुधुस्तदा अग्नि
रप्यारोदीत् ॥ तदाश्रुजंरजतमासीत् ॥ अतस्तद्दहिं बिन
देयमिति निषिध्यते इति ॥ एवं च मंत्रार्थवादनामधे
यसहकृतविधिनिषेधमुखेन वेदत्वावच्छिन्नस्य धर्मप्र
तिपादकतया स्वेतरानपेक्षाज्ञातज्ञापकत्वरूपं स्वतःप्रा
माण्यं अपौरुषेयतया पारमार्थिकनित्यत्वं च सिद्धमि
ति संक्षेपः ॥ एवमेव इदमंशे उत्तरमीमांसाऽनुकूल्यम
ध्यासनिरूपणे किंचिदभिहितपूर्वमपि वक्ष्माणप्रमेयां
शेत्वधिकतया व्यक्तीभावमापत्स्यते ॥ इदानीं तु क्र
मप्राप्तमपि तत् अतिसंक्षिप्योच्यते ॥ अथ साधनच
तुष्टयसम्पत्तिमतामपि सतांपरमपुरुषार्थसमर्थनाया
गणितगुणिगणगणनीयरमणीय मुक्तिसरणिकरणोयधु
रिणो बादरायणःपरमकरुणया उपनिषच्छुक्तिमध्यगता
नेकाद्वैतसिद्धान्तमुक्तानां मालामिव विशालांमुक्तयनुकू

त्वांचतुराध्यायीं अथातो ब्रह्मजिज्ञासेत्यादिभिर्विचित्रैः सूत्रैःसंग्रन्थयामास॥ तत्रप्रथमाध्याये सर्वेषां वेदान्तवाक्यानां तात् पर्यतोब्रह्मणि पर्यवसानलक्षणःसमन्वयः द्वितीयेसम्भावितविरोधपरिहारस्तृतीये आध्यात्मविद्या साधननिर्णयश्चतुर्थेविद्याफलविचारःसूत्रितइति वेदितव्यं एवंचेतादृशाद्वैतवादिनांवेदान्तविदाम्मतेतादृशस्वतः प्रमाणाधिकरणस्याऽम्नायत्वावच्छिन्नस्य स्वशिखोक्त्याखण्डाद्वैतसाक्षात् कारगोचरपरब्रह्मण्येव पर्यवसानेन निर्विचिकित्सतया ब्रह्मरूपत्वं सिद्धम् ॥ अधिकं तु उपरितुरीयांशे स्फुटीकरिष्यामः ॥ अत्र केश्चदुच्यते ॥ अस्य महतो भूतस्यनिश्वसितमेतदित्यनयाश्रुत्याअनित्योवेदः सएव वाचाविरूपनित्ययेतिश्रुत्यानित्यइति चेत् अर्धजरतीवद्भवति ॥ किं चवेदोनित्योवानवेतिसंदेहश्चोदेतिइति ॥ तत्रेत्यंसमाधीयते ॥ समानसोन आत्माजनानां ॥ यस्मिन्देवाअधिविश्वेनिषेदुरित्यादिवाक्यशेषाणां निर्णायकत्वेन न द्वापरावसरः ॥ संदिग्धे वाक्यशेषादितिनियमात् ॥ यथास्थाणुर्वापुरुषोवेति संशयेवल्पक्षादिनापुरुषत्व प्रकारकनिश्चयेसतिस्थाणु प्रकारकोभ्रमः ॥ तथावेदत्वावच्छिन्नस्यानित्यत्वप्रका

रको भ्रमएवनित्यःचमेव प्रमाविषयमितिमंतव्यं ॥ व
स्तुतस्तुनहिकेवलशब्दराशिरूपस्यैववेदत्वंवक्तुमुचितं॥
किंतुतादृशवर्णसमुदायोपाधिकतेजोविशेषस्यैव॥ अन्य
थावैशंपायनाज्ञयायाज्ञवल्क्यकृतकवेदवमनोत्तरंखदिरां
गारनिभोमूर्तिमान्वेदराशिर्दृष्टः ॥ तदावैशंपायनशि
ष्याःमहर्षिवांतंवेदंगुर्वाज्ञयाभक्षितवन्तः इतिपुराणडिंडि
मः ॥ तथा च नहि केवलममूर्तस्य शब्दरूपस्य वमनं
वान्तस्य च भक्षणं संघटते ॥ अपि चत्रैयुग्येवह्येषा वि
द्यातपति इत्यादि श्रुत्या मूर्ति मतः सूर्यस्य वेदत्रयीरू
पस्य प्रत्यक्षत्वात् ॥ अहोस्वित् तस्य यजुरेव शिर इ
ति तैत्तिरीयोपनिषद्भाष्यकारैरपि मंत्राणां मनोवृत्त्यवच्
छिन्नचैतन्यरूपत्वंस्पष्टमभिहितपूर्वमेव ॥ एवं ब्रह्माभि
न्नस्य तस्य केवलशब्दराशिरूपत्वोक्तिः परमतिभ्रान्ति
विषय इत्यवधेयम् ॥ ननु कथं ब्रह्माभिन्नत्वंतस्येति
चेत्समाकर्ण्यताम् ॥ यथा विषयप्रत्यक्षस्थले विषया
वच्छिन्नस्य चैतन्यस्य प्रमातृचैतन्येन अभेदस्तादृश
प्रत्यक्षत्वप्रयोजकः कथमित्युक्तो तदभिन्नाभिन्नस्य त
दभिन्नत्वनियमात् तत् पदेन विषयचैतन्यं तदभिन्नं
वृत्त्यवच्छिन्नं चैतन्यं तदभिन्नमन्तःकरणावच्छिन्नं

प्रमातृचैतन्यम् ॥ तथा तत् पदेन वृत्त्यवच्छिन्नं प्र माण्यचैतन्यं तदभिन्नं अन्तःकरणावच्छिन्नं प्रमातृ चैतन्यं तदभिन्नमन्तःकरणोपहितं साक्षिचैतन्यंतस्य तादृशवृत्त्यवच्छिन्नचैतन्याभिन्नत्वं तु व्यक्तमेव॥ वि शिष्टं शुद्धादनतिरिक्तमिति नियमतस्तु विशिष्टशुद्धयो रप्यैक्यं सुलभतयैव लभ्यतेति न किमप्यनुपपन्नम् ॥ अतस्तादृशजडशब्दसमुदायो पाधिकतेजोविशेषस्यैव वेदत्वेन व्यवहारो मुख्यः केवलशब्दसमुदायेवेदत्वव्य वहारो गुणीभूत एव॥ तथा च शब्दस्यानित्यत्वं वद तां मतेपि तादृशोपधेयस्य पारमार्थिकमेव नित्यत्वम्॥ नन्वेवं वस्तुमात्रस्यैव तत्तदुपाध्यवच्छिन्नचैतन्यसत्ता तिरिक्तसत्ताकत्वाभावेन तत् प्रतीतावपि चैतन्यस्यैव विशेष्यतया वस्तुमात्रस्यैव नित्यत्वापत्तिरिति चेत् ॥ तर्हि सजातीयोच्चारणपूर्वत्वव्याप्यानुपूर्व मत्वमेव वेदनित्वमिति न कोपि शंकापंककलंकावकाश इतिसि द्धम् ॥ एतावतावेदस्य स्वतः प्रामाण्ये सिद्धे अ र्थिक मेव स्वतः प्रामाण्यं प्रकृतशाखावतः शुक्लयजुर्वेदस्या पिसिद्धमेव अतोनाधिकतया प्रयत्यते॥ वक्ष्यमाणविशेष स्तुस्थूणानि खननन्यायेन प्रकृतस्य दृढीभावापादना

येवेतिज्ञेयं ॥ अतएवसूतसंहितायांशिवमहात्म्यखंडेद्वि
तीयाध्यायेप्युक्तं॥ वेदाःप्रमाणंप्रथमंस्वतएवततः परं ॥
स्मृतयश्चपुराणातिभारतंमुनिपुङ्गवाः ॥१॥ अन्यान्यपि
मुनिश्रेष्ठाःशास्त्राणिसुबहूनिच ॥सर्वंम्वेदाविरोधेनप्रमा
णंनान्यवर्त्मना ॥ २ ॥ एकएवद्विजावेदोवेदार्थश्चैकए
वहि ॥ तथापिमुनिशार्दूलाः शाखाभेदेनभेदिताः ॥३॥
अनंतावेद्विजावेदावेदार्थाश्चैवसत्तमाः ॥ अनंतावेदवे
द्यस्यशंकरस्यशिवस्यच ॥ माययानस्वरूपेणद्विजाहो
वेदवेभवमिति ॥ तत्रैवोक्ताअध्यापकपरंपरापि ॥ ब्रह्मा
णंमुनयः पूर्वंसृष्ट्वातस्मैमहेश्वरः ॥ दत्तवान्सकलान्वे
दान्स्वात्मन्येवस्थितानिमान् ॥ १ ॥ ब्रह्मासर्वंजगत्क
र्ता।शिवस्यपरमात्मनः ॥प्रसादाद्देवरुद्रस्य स्मृतीःतस्मा
रसुव्रताः ॥ २ ॥ ब्रह्मणः सकलान्वेदान् वशिष्ठः प्राप्त
वान् द्विजाः ॥ तस्माच्छक्तिस्तथा तस्मात्पराशरमहा
मुनिः ॥ ३ ॥ पराशरान्महाबुद्धिर्वेदव्यासो महामुनिः॥
व्यस्तवेदतयाव्यासोऽभवल्लोके बहुच्छ्रुताः ॥४॥ इति ॥
एवं चोक्तप्रमाणशिखामणे रागमगणस्यैव स्वतः प्रा
माण्यात्तदितरेषां स्मृत्यादीनां तु तन्मूलकतया प्रामा
ण्यात् परत एव तदिति सिद्धम् ॥ अथैषां प्रमाणानां प

रस्परं विरोधे तु श्रुत्यर्थस्यैव प्रबलतया स्वीकार्यतेति पुराविदोवदन्ति ॥ ननु स्मृत्यादयो यदि विरुद्धार्थमेव प्रतिपादयेयुस्तर्हि तेषां शाक्यस्मृतितुल्यत्वाद्वैदिकधर्मे स्वीकार्यतैवमास्तु इति चेन्मैवम् ॥ वेदगतधर्मादिविचाराणां प्रवचनार्थं प्रवृत्तानां मन्वादिस्मृतीनांशाक्यस्मृति सादृश्यस्य सर्वथाप्यसम्भावनीयत्वात् ॥ शाक्यस्मृतेस्तु वैदिकधर्मोच्छेदायैव प्रवृत्तत्वाच्च ॥ यत्तु क्वचिन्मन्वादिस्मृतिषु वैदिकार्थं विरुद्धमुपलभ्यते तदपि न प्रधानभूतं वैदिकधर्मंप्रक्षिपति ॥ किन्त्वङ्गभूतां कांचित् क्रियामेवेति ॥ यथा अग्निष्टोमयागेसदोमंडपे काचिदौदुम्बरी शाखानिखन्यते ॥ तस्याश्च सर्वतोवेष्टनं औदुम्बरीसर्वावेष्टयितव्या इति स्मृतिराचष्टे ॥ श्रुतिस्तु औदुम्बरींस्पृष्टोद्गायेदिति तस्याः शाखायाःस्पर्शं कृत्वा उद्गात्रासामानिगेयानीति ॥ एवं च सर्ववेष्टनेस्पर्शस्य बाधः ॥ स्पर्शनेवा सर्ववेष्टनस्येत्येवंरीत्या श्रुतिविरुद्धमपि सर्ववेष्टनंप्रतिपादयंती स्मृतिर्ज्योतिः ष्टोमयागं नवासामगानक्रियांप्रतिक्षिपति ॥ किन्त्वङ्गभूतंस्पर्शमात्रम् ॥ ततश्चैवं विषयविषयेस्मार्तं मतं केवलमुपेक्षणीयं भवति॥परन्तु नह्येतावतात्तदप्रमाणमेव

सर्वैर्येनिमन्तव्यम् ॥ यतोवैदिकधर्माचरणशीलैर्वेदार्थ विद्भिर्विद्वद्भिःस्मृतिकारैर्यत्स्वग्रन्थेष्वलेखी॥ तत्सर्वंयथा भूतं वेदवचनं पर्यालोच्यैव ॥ परन्तु सम्प्रतिवन्हीनां वेदशाखानामुच्छिन्नत्वेन तादृशस्मृत्यनुकूलमूलभूतवे दवचनस्यानुपलब्ध्या प्रत्यक्षानुमित्योर्प्रत्यक्षस्यैव ब लीस्त्वात् प्रत्यक्षोपलब्धश्रुतिसिद्धस्योदम्बरीस्पर्शादे रेवानुष्ठानमादरणीयमित्याहुः ॥ अत एव विरोधेत्वन पेक्षं स्यादसतिह्यनुमानमिति जैमिनीयं सूत्रमपि ह्य नुकूलतयैव वरीवर्ति तराम् ॥ किं च प्रत्यक्षश्रुत्यविरो धियत्स्मार्तं कर्मतद्वैदिकवदादरणीयमेवेत्याह याज्ञव ल्क्यः ॥ श्रुतिस्मृतिविरोधे तु श्रुतिरेवगरीयसि ॥ अ विरोधे तथा कार्यं स्मार्तं वैदिकवत्सदेति ॥ एवमेव म नुरप्यनुवदति ॥ श्रुतिं पश्यन्ति मुनयोस्मरन्ति च तथा स्मृतिम् ॥ तस्मात्प्रमाणमुभयं प्रमाणैः प्रमितं भुवीति॥ व्यासोप्येवमेव सस्मार॥ धर्ममूलं वेदमाहुर्ग्र न्थराशियनुत्तमम् ॥ तद्विदां संमृतिशीले च साध्वाचा रमनःप्रियमिति ॥ मरीचिरप्येवमेवावोचत्॥ दुर्बोधा वै दिकाः शब्दः प्रकीर्णत्वाच्च येखिलाः ॥ तत्रैत एव द ष्टार्थाः स्मृतितन्त्रे प्रतिष्ठिताइति ॥ अथ वेदप्रतिपा

दस्य धर्मस्य मूलतत्वं सत्यमस्ति ॥ अत एवातैरेय ब्राह्मणे ॥ ऋतंवाचदीक्षा सत्यंवाचदीक्षातस्मादीक्षितेन सत्यमेव वेदितव्यम् ॥ किञ्च चक्षुरेव सत्यमित्यादिव चनतोपि देवादिभिर्मनुष्यादिशरीरे चक्षुरूपं सत्यमेव निहितमस्ति ॥ अत एव कश्चित् किञ्चिदर्थमभापमा णों प्रत्याहलोकः ॥ अभोपदात्यभवान् तत् दृष्टवान सिततोदृष्टवानस्मीति यदात्र्ते तदेव श्रद्दधते ॥ नान्यथेति ॥ अयमेवार्थः अन्यत्रापि व्यक्तीकृतः स य था ॥ यज्ञानानाविधादान व्रतानिनियमायमाः ॥ योगो ज्ञानञ्चैवमाद्यं रूपं सत्यस्य वै बहु इति ॥ ऋग्वेदे प्येवमेव श्रूयते ॥ सत्येनोत्तम्भिताभूमिःसत्येनोत्तम्भि ताद्यौः ॥ ऋतेनादित्यास्तिष्ठन्ति दिविसोमोधिश्रितइ ति ॥ अत्रोत्तम्भिताधृतेत्यर्थः ॥ एवं च धर्मरूपेणतत्र तत्र सत्यमेव फलप्रदत्वेन संकीर्त्यते ॥ तस्मात्सत्य मेव धर्मस्य मूलतत्वं सिद्धमिति संक्षेपः ॥ सोयं सर्वार्य सम्मतो धर्मः ॥ वेदशास्त्रप्रतिपाद्यः प्रवृत्तनिवृत्तभेदे नद्विधैव प्रतीयते ॥ तत्स्वरूपमपि द्वादशाध्याये मनुः सस्मार ॥ इहामुत्रच वा काम्यं प्रवृत्तं कर्म कीर्त्यते॥ निष्कामं ज्ञान पूर्वन्तु निवृत्तमुपदिश्यते इति ॥ तत्र

प्रवृत्तिलक्षणो धर्मो द्वेधाश्रौतस्मार्त भेदात् ॥ यस्तु श्रुतिभ्य आगतः सः श्रौतः ॥ स्मार्तस्तुस्मृतिभ्य आगत इति ॥ तत्राग्न्याधानाऽग्निहोत्रादयो हि ऋग्वेदस्य च मन्त्रभागेस्थलविशेषे प्रसंगवशादुपवर्णिताः श्रूयन्ते ॥ यजुर्वेदेपि दर्शपूर्णमासेष्ठ्यादिरूपायज्ञक्रियाः स्फुटमुपनिबद्धाः सन्ति ॥ वेदत्रयस्य ब्राह्मणभागेपि सर्वेषां यज्ञानां सेतिकर्तव्यताकानां निरूपणमस्तीति ॥ अग्निहोत्रादयो धर्माः श्रुतिप्रतिपादिताः सन्तः श्रौतसंज्ञामालभन्ताऽगृह्याग्निसाध्यानि पाकयज्ञादिसंस्कारकर्माणि तु वेदत्रयस्य मन्त्रभागेन ब्राह्मणभागेन वा न विस्पष्टमभिधीयन्ते ॥ किन्त्वश्वलायनगृह्यसूत्रप्रभृतिभिः स्मृतिग्रन्थैः ॥ तस्मात्तानिस्मृतिसंज्ञामालभन्त ॥ ननु स्मार्तेषु कर्मस्वपितत्तद्वेदमन्त्रा एव विनियुज्यन्ते संपदन्ति च तानितानि गृह्यसूत्राद्युक्तकर्माणि ॥ किञ्चाश्वलायनगृह्ये प्रथमाध्यायस्यत्रयोदशेखण्डेउपनिषदिगर्भालम्भनं पुंसवनमनवलोभनं चेति स्मर्यते ॥ तदुपरिवृत्तिकृतानारायणभट्टेनाप्युक्तम् ॥ न केवलमेते एव संस्काराः वेदेनोक्ताः किन्तु गर्भाधानादि आत्मज्ञानान्ता अपि तत्र तत्रोक्ताः सन्ति इति ॥

तत्र यद्यपि वृत्तिकृतातत्तत्संस्कारबोधकाः श्रुतयोविशि
ष्य न प्रदर्शितास्तथापि गवेषणायामारब्धायां यथाय
थमुपलभन्त एव ॥ तथाहि शतपथब्राह्मणस्य चतुर्दशे
प्रपाठके नवमाध्याये ॥ अथाभिप्रातरेव स्थालीपाका
वृताज्यञ्चेष्टयित्वा स्थालीपाकस्योपघातञ्जोहोत्यग्नये
स्वाहा इत्यादिना गर्भाधानम् ॥ अथ यइच्छेत्पुत्रोमेप
ण्डितोविजिगीथ इत्यादिना पुंसवनम् ॥ जातेग्निमुप
समाधायेत्यादिना जातकर्मचोक्तम् ॥ तथा जाबालोप
निषदिब्रह्मचर्यं समाप्य ग्रहीभवेत् ॥ ग्रहाद्वनींभूता प्र
व्रजेदिति ॥ एवं च प्रदर्शितश्रुतिवाक्येभ्योपि स्मृत्यु
क्तानां कर्मणांभवत्युपलब्धिस्तत्कुतोनेषां श्रौतपदेन व्य
वहार इति चेदुच्यते ॥ तादृशमन्त्रब्राह्मणात्मकवेद
भागस्याग्निहोत्रादिवैतानिक क्रियाप्रतिपादनाय यथा
प्रवृत्तिस्तथा पाकयज्ञादिक्रियाप्रतिपादनाय प्रवृत्तेरभा
वात् नतेषां श्रौतसंज्ञासंवृत्तेति ॥ स्मृतिग्रन्थोत्पत्तेः पू
र्वमपि पाकयज्ञादिसंस्कारकर्माण्यार्यजनैः क्रीयमाणा
ण्यभूवन्निति तु समनन्तरोक्तश्रुतिवाक्येभ्योप्यनुमा
तुं शक्यत एव ॥ परन्तु तदानीं तनानां तेषां कर्म
णां निर्णीतं स्वरूपन्तु न शक्यतेऽवगन्तुम्॥ अविकल

धर्मस्वरूपावबोधकानां वाक्यानां प्रचरन्तिषु श्रुतिषु अनुपलम्भात् ॥ अग्निहोत्रादीनां वैतानिककर्मणां तु प्रायो ब्राह्मणग्रन्थतोऽवबुध्यते ॥ वेदकालानन्तरन्नानाविधानपारम्पर्यक्रमागत याज्ञिकसांप्रदायान् पर्यालोच्ययदार्थ कुशलैराचार्यैः शाखाभेदेन सम्प्रदायभेदं व्यवस्थाप्यवैतानिकानां गृह्याणां च कर्मणां सुगमाप त्तिः सूत्रग्रन्थैरावद्धा ॥ सोयं सूत्रकालः सांगगृह्यकर्मणां ज्ञापकोव्यवस्थापकश्चाभवत् ॥ एवं च यानियानि तु सांगानिश्रुतिषु नोपदिश्यन्ते तानि स्मार्तानि इत्युच्यन्ते इति तत्वन् ॥ तत्र तावत् कृष्णयजुःसंहितायाः प्रथमेकाण्डे षष्ठप्रपाठके नवमानुवाके प्रजापतिर्यज्ञानसृजत् अग्निहोत्रं चाग्निष्टोमञ्च पौर्णमासींचोक्तञ्चामावस्यां चातिरात्रं चेत्यादिना यज्ञानुकीर्तनं श्रूयते ॥ तेषां च प्रभेदाः यजुर्वेदश्रुतिषु बहवस्तत्र तत्र समुपदिष्टाः सन्ति ॥ तत्र केचित् प्रकृतिरूपाः केचिद्विकृतिरूपाःकेचिदुभयरूपाःकेचिदनुभयरूपाः इतिचातुर्विध्यं यज्ञानाम्॥सर्वेश्रौताःयज्ञाःअस्मिन्भेदचतुष्टये अन्तर्भवन्ति॥अथहविःसंस्थाःपाकसंस्थाःप्रोच्यन्ते॥ अग्न्याधेयमग्निहोत्रन्दर्शपूर्णमासौ अग्रयणीचातुर्मास्यानिनिरूढप

नान्नध्यापयेन्नैनान्याजयेतुनैभिर्व्यवहरेयुरिति ॥ तथा चैरपतितत्वमापद्येत ॥ यदाह याज्ञवल्क्यः ॥ अत ऊर्ध्वम्पतन्त्यन्ते सर्वधर्मबहिष्कृताः ॥ सावित्रीपतितात्रात्यात्रात्यस्तोमादृते क्रतोरिति ॥ अतस्ते यदि व्रात्यस्तोमाख्यं क्रतुविशेषं कुर्युस्तर्हि सावित्रीदानयोग्या भवेयुरिति व्यक्तम् ॥ अथ उपनीतमाचार्यः शिष्यं प्रथमतः शौचाचारअग्निकार्यसन्ध्योपासनादिशिक्षयेत् ॥ ततः सांगान्वेदान्नध्येष्यमाणशिष्यो गुरोः पादौ व्यस्ताभ्यां पाणिभ्यां संस्पृस्य तद्दक्षिणतउपविश्य ब्रह्माञ्जलीच विरच्य गुरुणा अधिष्वभोइत्युक्ते आदौप्रणवमुच्चार्ययथोपदिशेद्गुरुस्तथाऽभ्यसेत् ॥ द्विजानांवेदाभ्यास एव सकलपुरुषार्थसाधकइति वैदिकः सिद्धान्तः ॥ अतएवाहमनुः॥ वेदमेवाभ्यसेन्नित्यंतपस्तप्स्यन् द्विजोत्तम ॥ वेदाभ्यासोहि विप्रस्य तपःसारमिहोच्यते ॥ १ ॥ योनधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमाम् ॥ सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः ॥ २ ॥ इति अन्यत्रापि जन्मनाजायते शूद्रो संस्कारैर्द्विजउच्यते ॥ वेदाभ्यासाद्भवेद्विप्रो ब्रह्मजानातिब्राह्मण इति ॥ ब्राह्मणकुले जन्मनोत्पत्तिमात्रेण शूद्रःशूद्रकल्पो जायते इत्य

र्थः॥असंस्कृतस्य शौचाद्यभावात् ॥ अशूद्रछेदेपि पूर्वो
क्तएवार्थः प्रतिफलति ॥ ब्रह्मवेदं योजानाति अर्थतः
शब्दतश्चाधिगच्छति स ब्राह्मण इति भावः ॥ अत
एव यास्कमुनिवर्येणापि वेदार्थमजानतामुपहासः श्रु
तिवाक्यत एवोपदर्शितः ॥ तथाहि ॥ स्थाणुरयंभार
हारः किलाभूदधीत्यवेदं न विजानातियोर्थम् ॥ योर्थ
ज्ञ इत्सकलंभद्रमश्नुते नाकमेतिज्ञानविधूतपाप्मेति॥
तदेतदृचाप्युक्तम् ॥ उतत्वःपश्यनददर्शवाचमुतत्वः शृ
ण्वन्न शृणोत्येनाम् ॥ उतोत्वस्मै तन्वं वसस्त्रेजायेवप
त्यउशतीः सुवासाः इति अत्रत्व इति अदन्तंसर्वनाम
प्रातिपदिकं अन्यार्थकम् ॥ उतेतिनिपातोऽप्यर्थकः ॥
एवं च अन्यः कश्चिद्वाचं न ददर्श ॥ अन्यः खलुशृ
ण्वन्नप्येनां वेदलक्षणां वाणी न शृणोतीत्यर्थः ॥ इ
दमर्थंचमविद्वांसन्दर्शयति ॥ अत्र वाचोदर्शनं मानस
ज्ञानात्मकम्बोध्यम् ॥ अन्यथा वाचश्चक्षुर्विषयत्वान
र्हत्वेन दर्शीकर्मत्वानुपपत्तेः ॥ एवं चाविदुषा केवलं प
शुनेव शब्दरूपेण ज्ञातापितत्तच्छक्तिमत्वेनाज्ञातत्वा
त् अदृष्टप्रायैव भवति ॥ यदि कदाचित्परेणोच्चारि
तावाक् श्रुतापि अश्रुतैव अर्थज्ञानाभावादिति भावः॥

शुवंधःसौत्रामणीचेतिसप्तहविः संस्थाः॥ अग्निष्टोमोअ
त्यग्निष्टोमोउक्थः षोडशीवाजपेयोऽति रात्रआप्तोर्या
मेतिसप्तसोमसंस्थाः ॥ तत्रराजसूयाश्वमेधौतु क्षत्रिय
विषयावेवेति ॥ इतअधिकंतुजैमिनीयेतंत्रेअवगंतव्यं॥
अथस्मृताः पाकसंस्था प्रोच्यंते ॥ औपासनंवैश्वदेवः
पार्वणःस्थालीपाकः अष्टकाअन्वष्टकासर्पबलिरीशानब
लिश्चेति॥किंच॥गर्भाधानंपुंसवनंसीमंतोन्नयनंतथा ॥
जातकर्मनामकर्मनिष्क्रमोन्नाशनंतथा॥ चौलंचोपनय
श्चैववेदारंभचतुष्टयं ॥ जातकर्मनामकर्मनिष्क्रमोन्ना
शनंतथा ॥ चौलंचोपनयश्चैववेदारंभचतुष्टयं ॥ केशां
तस्तुसमावर्तोविवाहश्चेतिषोदश॥ २ ॥ शमोदमस्ति
तिक्षाचश्रद्धाच्चित्तजयस्तथा ॥ उपार मस्तुशौचंच क्रो
धाभावस्तथैवच ॥ ३ ॥ अष्टावेवात्मसंस्काराः मुनि
भिः परिकीर्तिताः ॥ श्मशानेतुत्रयंप्रोक्तं तथासंचय
नादिकमिति ॥ ४ ॥ एवं चाऽहत्यअष्टचत्वारिंशत्सं
स्काराः ॥ श्रौताःस्मार्ताश्चसंपद्यंते ॥ एतैःसंस्कृतएव
द्विजःचतुर्विधपुरुषार्थभाक् नान्यथा ॥ असंस्कार्यस्यव्रा
त्यत्वेन पातित्यात्॥ श्रौतादिकर्मस्वनधिकाराच्च॥ तत्र
संस्कारास्तावन्ननैयायिकमतीयस्तस्यगुणत्वात् ॥

किन्तु शास्त्रसिद्धो विजातीयदृष्टादृष्टफलकक्रियाविशे
षएव ॥ संस्क्रीयते अनेनेति व्युत्पत्यादोषापनयनपूर्व
कगुणाधानत्वमेव तल्लक्षणंपर्यवस्यति ॥ यथा व्रीह्या
दिद्रव्याणां प्रोक्षणादिसंस्कारेणैव कर्माङ्गत्वस्य दृकूगो
चरत्वम् ॥ तथा गर्भाधानादीनामपि ॥ तथाहि तत्रग
र्भाधानस्य गर्भाधिकरणशुद्धिः ॥ ततो जननोत्तरंजा
तकर्मनामकर्मनिष्क्रमणान्नप्राशन चौलांतानां यथोक्त
कालं विहितानामात्मशुद्धिः फलम् ॥ तदुत्तरं कामचार
कामभक्ष्यकामवादनिवर्तकमुपनयनं तच्चाचार्य समी
पेन नयनपूर्वकम्बटोर्गायत्रीसम्बन्धकरणम् ॥ इदमेव
द्वितीयं जन्मव्यपदिशन्ति ॥ यदाहमनुः ॥ मातुरग्रे
धिजननं द्वितीयं मौंजिबन्धने ॥ तृतीयं यज्ञदीक्षायां
द्विजस्य श्रुति चोदितम् ॥ तत्र यद्ब्रह्मजन्मास्य मौं
जीबन्धन चिन्हितम् ॥ तत्रास्यमातासाविन्त्री पितात्वा
चार्य उच्यतइति ॥ तस्योपनयनकालोपि श्रुत्यैवोच्य
ते ॥ अष्टमेंवर्षे ब्राह्मणमुपनयेद्गर्भाष्ठमेवा॥एकादशे
क्षत्रियन्॥द्वादशेवैश्यमिति॥आषोडशात्॥ ब्राह्मणस्यान
तीतः कालः ॥ आद्वादशात् क्षत्रियस्या चतुर्विंशाद्वैश्य
स्याऽतऊर्ध्वम्पतितसावित्रिकाभवन्ति॥नैनान्नुपनयेन्नै

उत्तरेणत्वर्धर्चेन विद्वान् प्रशस्यते ॥ तदित्थन्त्वस्मै अन्यस्मै विदुषेतन्वंशब्दार्थोभयात्मिकां निजतनूम्वि सस्त्रेप्रकाशयति इति विशेषः ॥ उशतीकामयमानासु वासा शोभनवस्त्रभूषिताजायाइवपत्येभर्त्रे ॥ यथाकुलवधूः स्वपत्ये सकलं निजकौशलमाविष्करोति इतरम्प्रतिगोपायति तथेयं वागपिविद्वांसमात्मानं दर्शयतीति भावः ॥ तस्मादविद्वत्तया परिहासविषयामाभूमेति मनसिनिधायप्रयोजनान्तरनिरपेक्षेण विप्रावेदाभ्यासं अर्थज्ञानपूर्वकं कुर्युरित्यावेदयति प्रकृतमंत्रोयमित्यवधेयम् ॥ अत एव ब्राह्मणेन निष्कारणो धर्मःषडङ्गोवेदाध्येयो ज्ञेयश्चेति व्यक्तमेवामुमर्थमयमागमोप्यवगमयति ॥ ब्राह्मणेन षडङ्गमर्थज्ञानसहितं वेदाध्ययनं कर्तव्यम् ॥ अयं तस्य निष्कारणोऽदृष्टप्रयोजननिरपेक्षोधर्म इति तदर्थः ॥ अथ अध्ययनं विचारोभ्यसनं जपोऽध्यापनं चेति भेदात् पञ्चधावेदाभ्यासो भवति ॥ एवमेव शौनकमुनिवर्येणापि स्मर्यते तद्यथा वेदस्वीकरणं पूर्वं विचारोऽभ्यसनं जपः ॥ तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधेति ॥ एवमेवाऽध्यापनप्रकारोपि तेनैवोच्यते ॥ पारायणं वर्तयेद्ब्रह्मचारी

गुरुः शिष्येभ्यः स मनुव्रतेभ्यः ॥ अध्याशीनोदिशमे
कां प्रशस्तां प्राचीमुदीचीमपराजितां वा ॥ १ ॥ एकः
श्रोतादक्षिणतो निषीदेत् द्वौ वा भूयांसस्तु यथावका
शमित्यादि ॥ अत्रापराजितामीशानिमिति यावत् ॥
एवंवेदविहितानिकर्माण्यपि यथाक्रमंज्ञात्वैवविधेयानि ॥
ज्ञात्वाकर्माणिकुर्वीतेत्यादिवचनात् ॥ तत्र श्रौतस्मार्ते
षुअनेकेष्वपि कर्मसु सत्सुअवश्यमनुष्ठेयानिनित्यानिका
नितिचेदुच्यते॥ अकरणेप्रत्यवायसाधनानिसंध्यावंदना
दीनि॥तत्रसंध्यैकस्य मुख्यत्वमितिचेत्समाकर्ण्यताम् ॥
अथातोकृतशौचविधिः पुमान्नद्यादौविधिवत्स्नात्वाधौते
वाससिपरिधायाचम्यप्राणानायम्य समाहितोभूत्वाप्रा
तः संध्यामुपासीत ॥ संध्यावंदनं हि द्विजातिभिरुपास्त
दुरितक्षयार्थं नित्यमवश्यमनुष्ठेयमित्याहमनुः ॥ पूर्वां
संध्यांजपंस्तिष्ठन् नैशंपापंव्यपोहति ॥ पश्चिमांतुसमा
सीनोहंतिपापंदिवाकृतं ॥ नोपतिष्ठतियः पूर्वांनोपास्ते
यस्तुपश्चिमां ॥ सशूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्म
ण इति ॥ किं चऋषयोदीर्घमायुरवाप्नुयुः ॥ प्रज्ञाय
शचकीर्तिं च ब्रह्मवर्चसमेवचेति ॥ तत्र दीर्घसंध्यत्वाद्दी
र्घकालसंध्यानुष्ठानादित्यर्थः ॥ अत्रसंध्यापदं अहोरात्र.

र्योः संधिकालाधिकरणक क्रीयमाणक्रियाविशेष वा
चकं तत्प्रस्थतयाकर्मनामधेय तादृशं पूर्णमासादिव
त ॥ तत्राच मनप्राणायामादिकमंगसावित्र्याः ऋचो
ऽर्थानुसंधान पूर्वकमानसिकोच्चारण लक्षणं जपाख्यं
कर्मतुप्रधानमितिज्ञेयं॥यदाहयाज्ञवल्क्यः ॥ प्राणाना
यम्यसंम्प्रोक्ष्य तृचेनाब्दैवतेनतु ॥ जपन्नासीतसावि
त्रींप्रत्यगातारकोदयात् ॥ संध्यांप्राक्प्रातरेवं हितिष्टे
दासूर्यदर्शनादिति ॥ अब्दैवत्तेनतृचेन अपोहिष्टेतिऋ
कुत्रितयेनात्मानं प्रोक्षयित्वाप्रत्यङ्मुख उपविशेदिति
भाव॥ एवंकाम्यानिकर्माणिस्वर्गादीष्टसाधनानिजोतिः
ष्टोमादीनि॥निसिद्धानिनर्कसाधनानिब्रह्महत्यादीनिनैमि
त्तिकानि पुत्रजन्माद्यनुबंधीनि जातेष्टादीनि॥प्रायश्चि
त्तानि पापक्षयमात्रसाधनानि चांद्रायणादीनि॥उपास
नानि सगुणब्रह्मविषयमानस व्यापारस्वरूपाणि शां
डिल्यविद्यादीनि॥एतेषां चित्तशुद्धिः परम्प्रयोजनं॥उपा
सनानां तु चित्तैकाग्र्यं परंप्रयोजनमित्य वधेयं ॥ त
त्रब्रह्मचारिणा नित्यान्येवानुष्ठेया निकाम्यानिग्रहस्थे
न मुमुक्षुणा तु उपासनानीत्यर्थः ॥ तथा च ब्रह्मचा
रीवेदानधीत्य गुरवेदक्षिणां दत्वास्नायात् ॥ तत स्व

गृह्योक्तसूत्रेण समावर्तनं कुर्यात् ॥ ततोविवाहः ॥ स च यथोक्तलक्षणयासह विधेयः यदाहयाज्ञवल्क्यः ॥ अविप्लुत ब्रह्मचर्योलक्षण्यां स्त्रियमुद्वहेत् ॥ अनन्यपूर्विकांकांतामसपिंडांयवीयसीमिति॥ तत्राऽसपिंडां॥समानः एकः पिंडोदेहोयस्याः सातादृशीनभवतीति असपिंडातामित्यर्थः ॥ सपिंडताचैकशरीरान्वये न भवति ॥ तथाहिपुत्रस्य पितृशरीरान्वये न पित्रासससपिंडया॥एवं पितामहादिभिरपि ॥ तथा पुत्रस्यमातृशरीरान्वयेन मात्रासहसपिंडता॥ एवं मातामहादिभिरपि मातृद्वारा ॥ तथामातृष्वसृमातुलादि भिरपि स्वजननि जनकजन्यत्वादिरूपयामातृद्वारा ॥ एकशरीरान्वयात्सपिंडतावेदितव्या ॥ तथापत्न्यासहपत्न्या एकशरीरंभकत्वेनैक शरीरान्वयात्सपिंडतावेदितव्या ॥ एवं भ्रातृभार्याणामपि परस्परमेकशरीरान्वितत्वेन सपिंडैर्भ्रातृभिः सह एक शरीरारंभकत्वेन सपिंडत्वमवगंतव्यं ॥ एवं च यत्रयत्रसपिंडशब्दः तत्रतत्रसाक्षात्परंपरयावाएकशरीरान्वयोवेदतव्यः॥अवश्यमेकशरीरान्वयेनसापिंड्यम्वाच्यं॥आत्माहि यज्ञे आत्मन इति ॥ प्रजामनुप्रजायेय इत्यादि श्रुतेश्च ॥ तयागर्भोपनिषदि एतत् पातृकौशिकं शरी

रं ॥ त्रीणिमातृतस्त्रीणिपितृतः ॥ अस्थिस्नायुमज्जानः
पितृतः ॥ त्वङ् मांसरुधिराणि मातृत इति तत्र तत्र
शरीरान्य प्रतिपादनादितिदिक् ॥ यदत्रैकशरीरान्वयं
सापिंड्यं यन्मूलकंतच्चानादौ संसारेसर्वस्यसर्वेणापि
सद्द्यथा कथंचित्संभवति॥इत्यतिप्रसंगवारणायाह या
ज्ञवल्क्यः॥सप्तमात्पंचमादूर्ध्वंमातृतःपितृतस्तथेति ॥
तत्रमातृतः मातृ संतानेपंचमात्॥तथा पितृतः पितृसंता
ने सप्तमादूर्ध्वं सापिंड्यंन्निवर्तते इति शेषः ॥ तथा च
पितृपितामहादयः षट् आत्मा च सप्तमः ॥ किं च.पुत्रा
दयः षट् आत्माच सप्तमः ॥ एतावंतएव परस्परं स
पिंडाःभवन्ति नान्ये ॥ संतानभेदेतुयतः संतानभेदस्त
मादाय गणयेत्॥यावत्सप्तममितिगणनीयं सर्वत्रेतिसं
क्षेपः॥ तथाचास्मिन्नेवाश्रमेप्रवृत्युपयोगिफलेच्छासमा
नाधिकरणकतृत्वरूपाधिकारविशिष्टः शिष्टः अग्निहोत्राद्य
नुष्ठाननिष्टः सन्नेववर्तेत॥कुर्वन्नेवेह कर्माणिजिजीविषे
च्छतंसमाः इत्यादिश्रुतेः॥ किंचसप्तपाकयज्ञाः॥सप्तह
विर्यज्ञाः॥सप्तसोमसंस्थेति एकविंशतिसंस्काराधिकृतत्वे
नैतस्यगृहदाश्रमेतिव्यवहारःप्रसिद्धः ॥ एवमपरिमितभ
वसंभवकर्मवैभवानुभवमनुभूयो पतमेत् ॥ कर्माणिसंन्य

स्य प्रव्रजेदित्यर्थः ॥ अधिकंमुपरितुरीयांशे व्यक्तीकरि
ष्यामः ॥ एवं चोक्तसंस्काराधिकारः त्रैवर्णकस्यैव
यदाह याज्ञवल्क्यः ॥ ब्रह्मक्षत्रिय विट्शूद्रावर्णास्त्वा
द्यास्त्रयोद्विजाः ॥ निषेकादिश्मशानांतास्तेषांवैमंत्र
तः क्रियाः॥तूष्णीमेताः क्रियाः स्त्रीणांविवाहस्तुसमंत्र
कः इति ॥ एवं मानुषजनुषाविष्टुषानि जजननीजन
नतोदेहांतपर्यंत मायुषश्चतुरश्चवि भागेषुचत्वारः पुरु
षार्थाश्चतुर्भिराश्रमैः साधनीयाः ॥ अत एवोक्तमभियु
क्तैः॥ अधीत्यचतुरोवेदान् पुत्रानुत्पाद्ययत्नतः ॥ ऋणा
नित्रीण्यपाकृत्य मनोमोक्षेनिवेशयेदिति ॥ अत्रेदमवधे
यं ॥ निवृत्तिलक्षणस्य धर्मस्यप्रवृत्तिपूर्वकत्वनियमादे
व वेदपुरुषेण पूर्वंकर्मकांडंसमाम्नाय पश्चाद्वोपनिष
द्भागेन ज्ञानकांडंसमाम्नातं ॥ तत्राद्यभागार्थः ब्रह्मणा
स्मृतिमुखेन व्याख्यातः ॥ द्वितीयस्तुविष्णुना व्यासरू
पेणाखतीर्थसूत्रपुराणेतिहासादिनोक्तः ॥ अत एवधर्मवि
षये यत्रस्मृतिपुराणादीनां विप्रतिपत्तिस्तत्रतात्पर्यवशा
त्स्मृतीनामेव प्रामाण्यं ॥ तत्त्वज्ञानविषयेतुपुराणादीना
मेवेतिबोध्यं ॥ किं च यादृशंयस्य नित्यनैमित्तिकादिकं
कर्मवेदेतद्रुपबृंहकस्मृत्यादौ चोपदिश्यते ॥ तादृशमेव

तेनानुष्ठेयंअन्यथा प्रत्यवायः प्रसज्जेत ॥ अपिचस्मृति
पुराणादिभिर्बोधितोविष्ण्वाद्याराधनरूपोपिधर्मो यथा
यथं भावानुसारेणानुष्ठातव्य एवेति ॥ स्यादेतत् पुर
णादिप्रतिपाद्योविष्ण्वाद्याराधनरूपोधर्मःनानुष्ठेयत्वमर्ह
तिपुराणादिनापरस्परंविमतिदर्शनात् ॥ तथा हि केषु
चित्शिवपुराणादिषु रुद्र एव जगदीश्वरः ॥ तथा
विष्णुपुराणादिषु तु विष्णुरेव ॥ एवं देविपुराणादि
षु ॥ देव्येव जगदीश्वरीति ॥ तत्र तत्र तस्य
तस्यैव मुख्यत्वमितरेषाम मुख्यत्वं तदाज्ञाधारकतयो
पदिश्यते ॥ एकस्यैवयुगपदुत्कर्षापकर्षयोरसंभवाच्च ॥
किं च वहवो जगदीश्वराइति तु न संघटते ॥ एवंचे
ज्जगत्सृष्ट्यादिनियमस्या व्यवस्थापत्तेः ॥ न वा कस्य
चित्पुराणस्य प्रामाण्यंकस्यचिदप्रामाण्यमित्यपि संभा
वयितुं शक्यते ॥ सर्वेषांपुराणानांव्यासप्रणीतत्वाविशे
षेणतथा कल्पयितुमशक्यतया अन्यतमस्याप्रामाण्य
निरूपणे न व्यासस्यप्रतारकत्वप्रसंगाच्च ॥ इति चेद
त्रानुगतमिदंसमाधीयते ॥ वस्तुत एकएवजगदीश्वरः
निजमायासहायतयाततत्कल्पादौ तत्तद्गुणसंबंधेनज
गदुत्पत्तिस्थिति लयार्थंरजः सत्वतमोभिर्लीलाविग्रहान्

पादत्ते ॥ यतस्तत्तद्विग्रहोपहितएवविष्ण्वादिशब्दैर्व्य
पन्दीयते ॥ अतएव तत्तत्पुराणेषु तस्यतस्य मुख्यत्वे
पि कल्पभेदेन तादृशलीलाविग्रहानुग्राहकमेव तत् न
वास्तविकमिति ॥ सदेवसोम्येदमग्रआसीत् ॥ एकमे
वाद्वितीयम्ब्रह्म ॥ नेहनानास्तिकिंचनेत्यादिश्रुतिभ्यः ॥
मायोपाधिभेदेन रुद्राद्यानंत्यंतु श्रुत्यादिप्रमाण प्रमित
मेव ॥ तथा हि ॥ सहस्त्राणिसहस्त्रशो ये रुद्राअधि
भूम्याम्॥किं च नमोस्त्वनंतायसहस्त्रमूर्तये सहस्त्रपादा
क्षिशिरोरुबाहवे इत्यादिस्मृतेश्च॥ एवंचतत्तत्पुराणेषुत
त्तदाराधनविशेषतया तस्यतस्यमुख्यत्वनदोषायेति फ
लितं ॥ केचितु न हिनिन्दानिद्यन्निंदितुम्प्रवर्ततेअपितु
स्तुत्यंस्तोतुमेवेत्यादिनियमानु भवतोपि एकस्यापिजग
दीशतुर्लीलाविग्रहभेदमुदाहरंति॥ तद्यथा ॥ गंगामू
र्धनिशीतदीधिति कलामौलौललाटस्थले ज्वालाहोतव
ह्नी गलेगरलजालेखाचनीलाकृतिः ॥ सर्वांगेपिचदृष्टि
कर्पणकरीकर्पूरकांतिः परा यस्यांकेपि च कापिपंकज
मुखी कस्मैचिदस्मैनमः ॥ १ ॥ यस्यांगेजलदद्युतिः
कटितटेसौवर्ण वर्णापटी नेत्रेफुल्ल सरोरुहप्रतिमनव
क्त्रेशशांकाकृतिः ॥ कंठेकौस्तुभकांतिरुज्वलतमा वक्ष

स्थले चोत्तमाकाण्यंभोजमुखी पदेसुरसरित् कस्मैचिद
स्मैनमः ॥ २ ॥ एवंचोक्तरीत्यासर्वे पुराणेपुकल्पभेदे
नो पासाकानुग्रहायताहशलीला विग्रहभेदमात्रं न वा
स्तवोवस्तुभेदइति पुराणोपासंकयोर्नेकोपि विरोधाव
रोधाभासोपि इतिसंक्षेपः ॥ एवं च एतावतावेदातिरि
क्तानां वेदमूलकतया परतः प्रामाण्यं वेदस्यतुप्रोक्तरी
त्यास्वतः प्रामाण्यमिति सिद्धं ॥ एवमेवोक्तं काव्य
प्रकाश कारैरपि ॥ काव्यंयशसे अर्थकृते व्यवहारविदे
शिवेतरक्षतये कांतासंमितसया उपदेशयुजेइत्यादि ॥
व्याख्याकारैरपि व्याख्यातं ॥ तद्यथा त्रिविधोहिशब्दः
प्रभुसंमितः कांतासंमितः सुहृत्संमितश्च ॥ तत्राद्योवेदा
दिः॥ द्वितीयः पुराणेतिहासादिस्तृतीयः काव्यादिरित्य
वधेयं ॥ एवंचाविभक्तवेदस्यस्वतः प्रकाशकत्वेनब्रह्मरू
पतयास्वतः प्रामाण्येसिद्धे एव विशिष्यविभक्तस्यापि
प्रकृतिशाखावतः शुक्लयजुर्वेदस्यायिकमेवस्वतः प्रा
माण्यं सुलभतयैवलब्धमित्युपरम्यते ॥ श्रीरामशास्त्रि
चरण रजोविरजीभूतजय रामात्मजकाशीवासिजगन्ना
थ सूरिविरचितोमाध्यं दिनशाखाप्रकाशस्यतृतीयांशः
समाप्तिमगात् ॥ श्रीमदन्नपूर्णारमणार्पणमस्तु ॥

विघ्नाध्यगस्तिरूपाय गजास्यापनतिर्मम ॥ सिद्धि बुद्धि युतो देव बुद्धिसिद्धि प्रदोभव ॥ १ ॥ तवतत्वं न जानामि कीदृशोसि महेश्वर ॥ यादृशोसि महादेवता दृशायनमोनमः ॥ २ ॥ याज्ञवल्क्यं नमस्कृत्य कण्व मध्यं दिनावपि ॥ कात्यायनं सूत्रकारं वच्म्यहन्तदनुग्र हात् ॥ ३ ॥ तुरीयोयं प्रमेयाख्यः प्रमेयविधि बाधकः॥ माध्यन्दिनीयशाखायाः प्रकाशांशोवितन्यते ॥ ४ ॥ अथात्रागणितधरणिगीर्वाणधुरीणाधिकरण भारतभूव लयांगणे प्रबलकलिकालीनमलीमसमनसां जात्याद्य भिमानजुषामप्यविदुषामज्ञान तिमिरनिकरनिरसनच तुरे पुनस्तरुणतरणिकिरणनिकरइव प्रचुरतरविकाशे प्यस्मिन् माध्यन्दिनीय शाखाप्रकाशे ॥ सद्विद्वन्मनोम न्दिरा मन्दानन्दकन्दसन्दोहजनि भूमयोप्यकृशास्त्र योप्यंशाः एतत्पर्यन्तं स मनुक्रान्ताः अभूवन् ॥ तेषु प्रथमांशे जनकमहाराजयजनीयानेक मुनिजनाभिभव पूर्वकब्रह्मिष्ठपणीभूत स्वर्णालंकृतगोगण स्वीकरणच णेन ब्रह्मविदग्रसरयोगीश्वरयाज्ञवल्क्यमुनिवर्येणाभिम तप्रकृतशाखायाः ब्रह्मविद्या सामानाधिकरण्यरूपासंग सिरभाणि ॥ तत्र प्रकृतशाखाया एवोत्कर्षे इतरासा

मपकर्षेण शाखिनोवेदत्वावच्छिन्नस्य स्वतः प्रकाशक
त्वं सर्वशाखावच्छेदेन भज्येतेति विरोधाभासनिरासा
यद्वितीयतृतीयांशावतारः ॥ तत्र द्वितीयांशे वेदत्वावच्
छिन्नस्य पौरुषेयत्वेनानित्यत्वनिराकरणपूर्वकमपौरुषेय
त्वेन पारमार्थिकनित्यत्वप्रतिपादनमकारि ॥ तृतीयेतुवे
दस्य परतः प्रामाण्यं निरस्य पूर्वोत्तरमीमांसानुकूल्ये
न च परं श्रुतिस्मृतिविरोधपरिहारः पुराणानामुपासका
नामप्याऽन्योन्यविरोध परिहारः प्रदर्शितः॥ एवं च
वेदत्वावच्छिन्नस्यापौरुषेयतया पारमार्थिकनित्यत्वेन
स्वतः प्रामाण्यमित्येतावता ग्रन्थेन स्थिरीकृतम् ॥ इ
दानीं तु प्रकृतशाखोन्निनीषया चतुर्णामपि ऋग्वेदा
दीनां मध्येशुक्लयजुर्वेदस्यैव प्रमेयस्य मुख्यत्वप्रतिपि
पादयिषया च ॥ उत्तमानुत्तममणिगणगणनन्यायेन
मुक्ताफलप्रवालन्यायेन वा शुक्लयजुर्वेदस्यैव मुख्यत्व
विषयकंपरीक्षणमाचष्टे ॥ अथ महतोभूतस्य निश्वसि
तमेतद्यदृग्वेदो यजुर्वेदः सामवेदोह्यथर्वणेति बृहदार
ण्यश्रुतिः ॥ किञ्च प्रजापतिर्लोकानसृजत्तेभ्यो वेदान
सृजदित्युपक्रम्यउच्चैर्ऋचा उपांशु यजुषाउच्चैः सा
म्नेत्युपसंहारस्तैत्तिरीयेपि श्रूयते ॥ अन्यच्च सामवेदी

यच्छान्दोग्योपनिषदि ॥ ऋग्वेदं भगवोध्यमियजुर्वेदंसा मवेदमथर्वणमित्यपि श्रावणविषयतामनुगच्छति ॥ स्मृतिरप्येवमेवानुवदति ॥ सर्वोर्थवेदकोवेदश्चतुर्द्धाभि धते क्रमात् ॥ ऋग्वेदोथयजुर्वेदः सामवेदोह्यथर्वण इ ति ॥ एतादृशानेकश्रुतिस्मृत्यादिप्रमाणेषु ऋग्वेदपूर्व कएव सर्ववेदानां पाठक्रमः प्रसिद्धतयादरीदृश्यते ॥ अथ एतेषु चतुर्षु ऋग्वेदादिषु सर्वेषामेव मुख्यत्वमु तान्यतमस्यैवेति ॥ तत्र नाद्यः॥ मुख्यामुख्यव्यवहारो लुप्येत ॥ नापि द्वितीयः॥वेदत्वावच्छिन्नस्य मुख्यत्वा मुख्यत्वरूपविरुद्धधर्माधिकरणत्वं प्रसज्जेत ॥ विनि गमनाविरहश्च ॥ ननु यस्य मुख्यत्वे विनिगमकं त स्यैव मुख्यत्वमास्तामिति चेन्न ॥ पूर्वोक्तं विनिगमकं ऋग्वेदस्य यथा तथा यजुर्वेदादीनामपि ॥ स्तोमश्च य जुश्च ऋग्चेति ॥ वेदाना सामवेदोस्मि इत्यादि श्रुति स्मृत्यादिविनिगमकस्य सर्वमुख्यत्वव्यवहारजनकस्य सर्वसाधारण्येन जागरूकत्वात् ॥ अत्र केचिद्वुच्यते ऋग्वेदस्यैव प्रथमोपस्थितत्वात् ॥ असंजातविरोधि त्वात् ॥ उच्छिन्नशाखिनां ब्राह्मण्यापादकसंस्कारेषु सत्स्वपि सर्वेषु वेदेषु तस्यैव विनियोगाच्च ॥ अतः

सर्ववेदापेक्षया ऋग्वेदस्यैव मुख्यत्वन्तदध्येतृणामग्र पूजाधिकारश्च ॥ दृश्यते हि प्रकृतकालिकवसन्तोत्स वमन्त्रजागरादौ तन्मन्त्रारम्भपूर्वक एवान्यमन्त्रारम्भ इति ॥ इदमसमञ्जसम् ॥ तथाहि यथा तार्किकैः प्र त्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रे प्रथमोप स्थितत्वेन प्रत्यक्षस्यैव मुख्यत्वमुच्यते ॥ तदसत् ॥ अस्तिकत्वावच्छिन्नाभिमता पौरुषेयवेदप्रामाण्यस्या मु ख्यतापत्तेः ॥ नन्वनुमानाद्युपजीव्यत्वेन मुख्यत्वमि ति चेन्न ॥ सविकल्पकत्वावच्छिन्नप्रत्यक्षनाशके संस र्गानवगाहितत्वमस्यादि महावाक्यजन्यतात्त्विकनिर्वि कल्पकप्रत्यक्षोपजीव्यभूतभागलक्षणादिविषयकज्ञाना दौ व्यभिचारात् ॥ किञ्च लौकिकेपि व्याधवर्द्धितराज कुमारादौ दशमस्त्वमसि इत्यादौ च प्रत्यक्षे शब्दज न्यत्वस्य व्यक्तत्वात् ॥ तथा च प्रत्यक्षे यथा प्रथमो पस्थितत्वं मुख्यत्वाप्रयोजकम् ॥ तद्वदृग्वेदेपि मुख्य त्वापादकं तन्न भवितुमर्हति ॥ यद्यभिमानिकतया हृ ठादेव उच्येत ॥ तदुत्तरमपरमपि प्रचुरतरम्वरीवर्ति तराम् ॥ तथाहि स्त्रियोवैश्यास्च शूद्रास्चतेपि यान्ति पराङ्गतिम्॥ किञ्च कर्णश्च भीष्मश्चजयद्रथश्चेति ॥

आहुस्त्वां ऋषयः सर्वे देवर्षिर्नारदस्तथा ॥ असितोदेव
लोव्यासः स्वयं चैव ब्रवीषिमे॥ इत्यत्र किं च श्वशुरम
घोनामतद्धित इत्यत्र पाणिनीयसूत्रेपि ॥ अपि च श
त्रुघ्नप्रमुखादाशरथा इति ॥ अहोस्वित् सहदेवप्रमु
खाः पाण्डवाः॥इत्याद्यनेकोक्तानुक्तश्रुतिस्मृतिसूत्रेति हा
सपुराणरामायणादिप्रमाणीभूत महाकविवर प्रयोगेषु॥
यथाक्रमं स्त्रीकर्णासितभपकशत्रुघ्नसहदेवादीनामपि
प्रथमोपस्थितत्वेन मुख्यत्वमापतेत् ॥ अपि च अयो
ध्या मथुरामाया काशिकांची अवन्तिका ॥ अत्रापि स
कलजाबालादिश्रुतिस्मृतिपुराणेति हासादिप्रसिद्धस्या
विमुक्तवाराणसिक्षेत्रस्यामुख्यत्वापातश्च प्रसज्जेत ॥
अहोस्वित् पाणिनिकात्यानिपतञ्जलिमध्ये यथोत्तरं
मुनीनां प्रामाण्यमिति वचनेन प्राप्तम्पाणिन्यपेक्षया
कात्यायनस्य तदपेक्षया साक्षाच्छेषावतारस्य भगवतः
पतञ्जलेर्मुख्यत्वं व्याहन्येत ॥ मत्स्यः कूर्मो वराहश्चे
त्यत्रापि पूर्णावतारत्वेनाभिमत रामकृष्णाद्यपेक्षया म
त्स्यादीनामेवमुख्यत्वमापतेत ॥ इत्यलंकिम्बहुना॥ परं
च भवदीय ऋग्वेदस्यैवाऽष्टअष्टकात्मकस्य चरमाष्टका
पेक्षयाप्राक्तनत्वेनोपस्थितानांसप्तमादि प्रथमपर्यन्तानां

पूर्वपूर्वत्वेन तथा अन्तिमाध्यायापेक्षया प्रथमाध्याये तथा अन्तिमवर्गापेक्षया प्रथमवर्गे पाश्चात्य ऋगपेक्षया प्रथमर्चितथाअन्त्या अक्षरापेक्षया अद्याक्षरस्य प्राबल्यदौर्बल्याद्यनेकपूर्वोपस्थिता नन्तरोपस्थितादिप्र थितातिविशालेयं शृंखला ॥ उछृंखलाबलाल्लिङ्गनमि षबलादेव भवद्गलालम्बितेव विलसतीति ललित मिदमिति ॥ ननु श्रुतिलिङ्गवाक्यप्रकरणस्थानसमा ख्यानां समवाये पारदौर्बल्यं अर्थविप्रकर्षादिति जैमि नीयसूत्रे॥ श्रुत्यादीनांमध्ये पारदौर्बल्यं पूर्वापूर्वापेक्षया परम्परं दुर्बलं आर्थस्याङ्गतासाधनरूपस्यप्रयोजनस्य विप्रकर्षाद्व्यवधानादिति सूत्रार्थः ॥ तथाचात्र यथा श्रु तेः प्रथमोपस्थितत्वान्मुख्यत्वं तथा ऋग्वेदस्यापि सम मेवेति चेन्न ॥ तत्र साध्यत्वसाधनत्वयोरन्यतरबोधक तृतीयादिपदोदित ऐंन्द्यागार्हपत्यमुपतिष्ठते इति श्रु तेरेवशीघ्रगामित्वेन लिङ्गाद्यपेक्षयाप्राबल्यम् ॥ तथा ऋग्वेदस्य शीघ्रगामित्वेन सादृश्याभावात् ॥ यजुर्वे दादीनामपि मन्थरगामित्वेन सादृश्याभावाच्च ॥ एवं च प्रथमोपस्थितत्वं ऋग्वेदस्य मुख्यत्वापादकं वक्तुं न शक्यते इति सिद्धम् ॥ एवं द्वितीयेनासंजात

विरोधित्वेनापि हेतुनातन्मुख्यत्वं सुतरां वक्तुम श
क्यम् ॥ कथमिति चेदुच्यते ॥ अत्र किन्नामासंज्ञात
विरोधित्वं प्रथमपठितत्वं वा ज्येष्ठराजकुमारादिवित्र
प्रथमोत्पन्नत्वं वा ॥ तत्रनाद्यः निरुक्तदोषाणामेव वा
धकत्वात् ॥ नापि द्वितीयः ॥ अपौरुषेयेषु उत्पत्तेरेवा
भावेन प्रथमोत्पन्नत्वस्य दूरन्निरस्तत्वात् उत्पत्तिकत्वे
पि वेदान्तरापेक्षया ऋचः प्रागुत्पत्तौप्रमाणाभावाच्च ॥
एतस्य ऋग्वेदस्य शाकलाः बाष्कलाः आश्वलायनाः
सांख्यायनाः मांडुकाश्चेति पंचैव शाखाः सन्ति ॥ तत्र
प्रस्तुतकालीनाः सर्वे ऋग्वेदिनः बाष्कलशाखीयाः स
न्ति परञ्च बाष्कलशाखायाः उच्छिन्नत्वेनानुपलम्भा
त् तेषां स्वशाखाभावएवोपलभ्यते ॥ अतस्तैर्निरुक्ता
ख्यायिका विख्यातस्य शाकलस्यैव शाखापठ्यते ॥ इ
तिकृत्वा तेषां स्वशाखालाभेनान्यशाखा अध्ययनका
रित्वमिति सिद्धम् ॥ एवं च तेषामन्यशाखाध्ययनं त
था कर्मानुष्ठानं महादोषजनकमित्याह वशिष्ठः ॥
पारम्पर्यागतो येषां वेदः स परित्र्यम्हणः ॥ तच्छाखं
कर्मकुर्वीत तच्छाखाध्ययनं तथा ॥ १ ॥ अधीत्यशा
खामात्मीयामन्यशाखां ततः पठेत् ॥ शिखां सूत्रं च

पुद्भ्च समयाचारमेवच ॥ पूर्वैराचरितं कुर्या दन्यथा पतितोभवेदिति ॥ मनुरपि ॥ स्वसूत्रे वर्तमाने तु पर सूत्रेण वर्तते ॥ ब्रह्महत्यासमंपापं भवेत्सूत्रापमानतः॥ यज्ञपार्श्वेतु ॥ स्वशाखांयः परित्यज्य ह्यन्यशाखामुपा सते ॥ शाखारण्डःसविज्ञे यः सर्वकर्मबहिष्कृतः ॥ इ त्याद्यनेकवचनतः शाखारण्डत्वादिदोषश्रवणेन संजा तविरोधित्वात् कथमसंजातविरोधित्वं तन्मुख्यत्वापा दकमिति स्वत एव विभावनीयम् ॥ किंचोक्तारव्यायि कारव्यापितमपि संजातविरोधित्वं मन्वादिस्मृतिभिर तीवदृढीभावमगादित्यवधेयम् ॥ अत एव. स्वपद घटितोयं स्वाध्यायोध्येतव्य इति नित्याध्ययनविधिः स्वशब्देन स्वशाखाअध्ययनपूर्वकमेवान्य शाखा अध्य यनं बोधयति ॥ अनुभूयते च ब्रह्मयज्ञादौ सर्वशाखि भिः स्वशाखाध्ययनपूर्वकमन्यशाखाध्ययनमिति॥ अन्य थाताद्दशविधौ स्वपदस्य वैय्यर्थ्यमेवापद्येतेत्याद्यवधेय म्॥ एवं चोकरीत्याशाखारण्डत्वदोषवत्तयासंजातविरो धित्वेना संजातविरोधित्वाभावान्नैतेनतन्मुख्यत्वमिति सिद्धम् ॥ किं च ऋग्वेदः स्त्री यजुर्वेदः पुरुषः सामाथर्वणौतयो प्रजेति बृहदारण्येपि श्रूयते ॥ त

थाहि त्रयोवेदाः एतएव वागेवऋग्वेदोंमनोयजुर्वेदः प्राणःसामवेदः ॥ पितामाताप्रजेत एव॥मनएव पिता वाङ्मातापाणः प्रजेत्यादि ॥ अत्रकेचित् ॥ अन्यशाखोक्तकर्माणिऋक्शाखीकुरुतेयदा ॥ तत्कर्मत्सफलंज्ञेयं पाराशरमतस्मृतमिति ॥ विश्वामित्रः ॥ वशिष्ठोपि॥ ऋग्शाखयाकृतं कर्मयदिस्यादन्य शाखिनां॥ न तत्कर्मपुनः कुर्यादिति वेदविदांमतं ॥ यत्रनास्ति स्वशाखाचेत् ऋग्शाखोक्तंसमाचरेत् पुनर्नाहंतिसंस्कारमन्यथाकुरुतेपुनरिति॥ वचन त्रयबलाद्वाजसनेयिनामपि कर्मऋग्शाखयाकृतं चेत्सफलमिति वदंति ॥ तदस्यंतासमंजसं ॥ कुवचिद्देशेस्वशाखीय ब्राह्मणालाभेसतिव्रतबंधकालातिक्रमेण सर्वथा कर्मलोपं प्रसक्तौकथंचित्संकटविषयतयानेयानितानिवचनानीति ॥ न तु. स्वशाखीयसत्वेतमनां हत्यऋग्शाखीयेनैव तानीति ॥ नन्विदंकथमवगम्यतेतिचेदुच्यते ॥ पूर्वोक्ततृतीयवचने एव यत्र नास्तिस्वशाखोचेत्यादित्युक्तत्वात् ॥ किंचकात्यायनोप्युवाच ॥ वक्ष्यपवास्वगृह्योक्तंयस्य यावत्प्रकीर्तितं ॥ तस्यतावतिशास्त्रार्थेकृते सर्वंकृतंभवेदित्यादिवचनतोपि स्वशाखीयमेवज्यायः ॥ किं च यजुः

शाखाविधानेंतु यदि यक्कर्चेकर्मचेत् ॥ कृतंचापिहितत्क
र्मपुनः कुर्याद्यथाविधि ॥ इत्यादिवचनशतैरपि स्वशा
खीयमेवकर्माचरणीयं ॥ नान्यशाखीयमिति ॥ अन्यथा
दोष श्रवणात् ॥ एतेन उच्छिन्नशाखिनांब्राह्मण्यापाद
कसंस्कारेपुसत्स्वपि सर्वेषुवेदेषु तस्यैवविनियोगादि
त्याकारकस्त्रितीयोपिहेतुः प्रत्यारूयातः इत्यवधेयं ॥
एवंचोक्तहेतुभिः सर्वेषुवेदेषु ऋग्वेदस्यैव मुख्यत्वमि
ति वदतांमतस्य दत्त तिलांजलिकतयायजुर्वेदापेक्षया
नऋग्वेदस्य मुख्यत्वमिति सिद्धम् ॥ एतद्वतसामाथर्व
णावपिप्रत्याख्यातौवेदितव्यौ ॥ इदमापाततःप्रबलम
ल्लनिवर्हण न्यायेनोपपादितं ॥ अधिकंतुशुक्लकृष्ण
यजुर्वेदविचारावसरेति रुचिरतया व्यक्तीभावमापत्स्य
ते इत्यवधेयं ॥ अथाऋग्वेदत्वापेक्षया यजुर्वेदत्वं व्याप
कमित्यादिविचारस्य तु शुक्ल कृष्णयजुर्वेद भेदकार
णानिर्णयाधीनत्वात् अतपूर्वतत्कारण निर्णयएवक्रीय
ते ॥ अयमध्वर्यशाखाविचारो विष्णुपुराणे तृतीयांशेऽव्य
क्तः सयथा ॥ यजुर्वेदतरोः शाखाआसन्नेकोत्तरंश
तं ॥ १०१ ॥ ऐको न पष्टिशाखाश्च कठादय उदाहृ
ताः ॥ १ ॥ सप्तविंशतिशाखाश्च ततःकृष्णांक्याःस्मृ

ताः ॥ शुक्लाःपंचदशप्रोक्ता इत्यादि ॥ तथामुक्तिकोप
निषदि॥नवाधिक शतमध्वर्यु शाखाः प्रतिपादिताः॥ चर
णव्यूहकारैस्तुयजुर्वेदस्य षड्शीतिभेदाएवोक्ताः ॥ तथै
व एकशतमध्वर्यु शाखा इतिमहाभाष्यकारैरप्युद्घो
षितं ॥ एवं चैतेषां परस्परंविरोधः सपूर्वपरिन्हीयते ॥
श्रुतिस्मृतिविरोधेतुश्रुतिरेवबलीयसीति वचनतोपिमुक्ति
कोपनिषच्छुतिवचस एव मुख्यतयाते नैवेतरेषामैकक
ठ्यं विधीयते ॥तद्यथा॥ चरणव्यूहेतु ॥ आदौषड्शीति
भेदाःउक्ताः॥ ततः कण्वादिपंचदशाखाःकथिताः॥ततोप्य
ग्रे तैतिरीयाष्टशाखाग्रहणंकृतं॥ तथाचाहत्यनवाधिकश
तसंपत्त्यामुक्तिकोपनिषच्चरण व्यूहयोरविरोधः ॥ तथा
प्येकशतमध्वर्यु शाखा इति भाष्यविरोध इति चेन्न ॥
तैतिरीयाष्टशाखानामवांतरभेदत्वात्तैरग्रहीताः ॥ चरण
व्यूहेमुक्तिकोपनिषदिचावांतरभेदान् ग्रहीत्वोक्त मित्य
विरोधः॥ एवंभेदाभेदग्रहणाग्रहणाभ्यांविरोधपरिहारस्तु
सुकरएव अत्रयजुषः शुक्लकृष्णभेदापादिकेयं माख्या
यिका ॥ अथ कदाचित् दैववशाद्वैशंपायन नामकोगुरुः
स्वःस्वस्त्रीयंबालंहतवान्॥ तज्जन्यब्रह्महत्यादोषमपाक
र्तुमाह॥ हेशिष्याः मदीब्रह्महत्यापापापहं व्रतमाचरत

इत्याज्ञापयामास ॥ ततः शिष्येपुव्रतमाचरत्सु सत्सुतत्र याज्ञवल्क्यः॥किमेतैरल्पसारैरहमेकएव व्रतंचरामीत्यभाणीत्॥तच्छ्रुत्वाकुपितोगुरुरुवाच॥विप्रानमंत्रात्वयाछात्रेणालंमदधीतं त्यजेत्यूचिवान् ॥ ततोयाज्ञवल्क्यः रुधिरक्तानियजूंषिचच्छर्द ॥ ततस्तच्छिष्याः गुर्वाज्ञया तल्लोलुपतयात्तित्तिराःभूत्वावांतान् तान्वेदान् आदन् ॥ तेवांताशिन स्तैत्तिरीयसंज्ञकाः अभवन् इति ॥ अथ ॥ याज्ञवल्क्यः स्ततः प्राह प्रणिपत्य दिवाकरम् ॥ यजूंषितानिमेदेहि यानिसंतिनमेगुरौ ॥ १ ॥ एव मुक्तोददौतस्मै यजूंषि भगवान्रविः ॥ अयातयामछंदांसियानिवेत्तिनतद्गुरुः ॥ २ ॥ याज्ञवल्क्यस्ततोब्रह्मन् स्वशिष्येभ्यउवाचहं ॥ वाजिनस्तेसमाख्याताः सूर्यस्त्वश्वोभवद्यतः ॥ ३ ॥ शाखाभेदास्तुते तेषां दशपंच चवाजिनाम् ॥ कण्वाद्यास्तु महाभागा याज्ञवल्क्याः प्रकीर्तिताः ॥ ४ ॥ इति सूर्यपुराणे वाराहपुराणेतु हयग्रीवः कदाचित्तु सुरद्वेषी महाबलः ॥ भक्षयित्वा बहून्वेदान् सपातालं समाविशत् ॥ १ ॥ दैत्यं विदार्यता न्वेदान् ब्रह्मणे प्रददौहरिः ॥ द्वापारादौ महायोगी पाराशर्यो महातपाः ॥ अवतीर्यायतान्वेदान् ब्राह्मणेभ्य

उवाचह ॥ भाविवृत्तान्तमाज्ञाय त्रिकालज्ञोमुनिस्तदा॥ यजूंषिया तयामानि सूर्यमध्याप्यचिक्षिपे ॥ छर्दैता याज्ञवल्क्यस्तु छन्दांस्ययगवेषयन्॥ गुरावविद्यमाना निसूपतस्थे दिवाकरम् ॥ ४ ॥ सूर्यंप्रसाद्यकालेनप्रा प्यतस्माद्यजुर्गणम् ॥ शुक्लान्यथा तयामानि यजूंषि प्राप्यभास्वतः ॥ ५ ॥ शाखाश्चक्रे पञ्चदशकण्वाद्या श्च महामुनिरिति ॥ श्रीमद्भागवतेपि ॥ वैशम्पायनशि ष्यावै चरकाध्वर्यवो भवन् ॥ इत्याद्यारभ्यजग्रहुर्वा ज सन्यस्तः कण्वमध्यन्दिनादयः ॥ इत्यन्ते नापि एतदेव प्रतिपादितम् ॥ अत्र केचित् द्वापारादौ व्यासेन स्वी यद्वितीयशिष्यायवैशम्पायनाय षडशीति शाखाएवोप दिष्टाः ॥ वैशम्पायनाय निगदाख्यं यजुर्गणमित्यादि वचनतः ॥ किञ्च वैशम्पायन एवैकोनिष्णातो यजुषा मुतेत्यादिवचनतोपि वैशम्पायनोद्देश्यकव्यासकर्तृकष डशीति शाखामात्रविधानबोधनेन तासामेव पञ्चदश शाखापेक्षया पूर्ववृत्तित्वेन च प्राधान्यान्मुख्यत्वमिति ते तिरीयशाखाभिमान्यग्रसराः समत्सराः सन्त· सोपक्रो शमाक्रोशंतीति यत्तदत्यन्तमसदित्युच्यते ॥ कथमिति चेत्सावधानतया श्रृणुतस्मरततानि सर्यवराहपुराणादि

वचनानि ॥ येष्वनुपदं याज्ञवल्क्येन पूर्वगृहीतवेदछर्द
नानन्तरम् साक्षात्सूर्यप्रसादतः प्राप्तानामयातयामा
नां शुक्लयजुषां मुख्यत्वादेव त्रिकालज्ञो व्यासः वैश
म्पायनाज्ञया याज्ञवल्क्यः तदीय वेदान् तस्मैसमर्प्य
स्वीयायातयामवेदान्वेषणं करिष्यतीति भाविवृत्तान्तं
माज्ञाय तादृशवेदविभागात्पूर्वमेव पञ्चदशशाखात्म
कं शुद्धं सारभागं भगवतिभानौ निहितवानिति ॥ कि
ञ्चाधुनावाक् युद्धे सन्नद्धाःभवत ॥ एतावत्पर्यन्तं यजु
र्वेदत्वावच्छिन्नस्य ऋग्वेदाद्यपेक्षया श्रैष्ठ्यमापादितं ॥
इतः परन्तु अन्यैः सहविरोधेतु वयम्पञ्चोत्तरं शतम् ॥
परस्परं विरोधेतु यूयं यूयं वयं वयमिति ॥ महाभार
तीयवनपर्वघटकधर्मराजवचनवत् ॥ कौन्तेयराधेयज
यपराजयवद्धासमवधारयन्तु भवन्तः ॥ निरुक्तवराहपु
राणवचनानुरोधेन यदा हयग्रीवदानवकर्तृकवेदभक्ष
णोत्तरं भगवान् नारायणः हयग्रीवरूपः सन् पाताल
तलेतन्दनुजम्विदार्य ब्रह्मणे पुनर्वाजिरूपेण तेनैव वे
दानुपादिदेशेति कृत्वा वाजित्वं ऋग्वेदादीनामपि सम्भ
वति ॥ तथापि सारभागस्य भानौ व्यासेन न्यासोत्तरं
साक्षाद्वाजिरूपेण रविणायाज्ञवल्क्यस्योपदेशदर्शना

द्यास्तवं याजितं शुक्लयजुर्वेदस्यैव ॥ दानवाद्यनुच्छि
ष्टत्वेन सारवत्तया शुद्धत्वात् ॥ ऋग्वेदादीनां तु दान
वोच्छिष्टत्वेन कृष्णत्वेपि ॥ वैशम्पायनयजुषां तु पूर्वंदा
नवोच्छिष्टत्वेन सर्वसाम्येपि पुनर्याज्ञवल्क्यवान्तत्वेन
द्विगुणोच्छिष्टत्वरूपोत्तमकृष्णत्वस्य जागरूकतया पुन
रभिमानिकतया वैशम्पायनीयाः स्वशाखामुख्यत्वं व
दन्तो विवदन्तोपि कथमद्यपिलज्जाजलधिमज्जन सज्जाः
न भवन्तीति परमाश्चर्यमिदम् ॥ ननु एक आसीद्यजु
र्वेद स्तञ्चतुर्द्धाव्यकल्पयदितिकूर्मपुराणवचनतः केवल
यजुर्वेदत्वस्य मुख्यतावच्छेदकतया तद्विशिष्टत्वेनास्म
द्वेदस्यैव मुख्यत्वमास्तामिति चेन्न ॥ तादृशकूर्मपुरा
णीयवचनगतयजुर्वेदपदस्य शुक्लयजुर्वेदपरत्वात् ॥
अन्यथा बृहन्नारदीयवचोपि व्याकुप्येत ॥ तथाहि य
जुर्वेदमहाकल्पतरोरेकोत्तरं शतम् ॥ शाखास्तत्रशिखा
कारा दशपञ्चच शुक्लगाइत्यादि ॥ तथाचाक्तयजुर्वेद
सुरतरुवरीयएकोत्तरशतशाखा सुत्रिभागे कृते पूर्वे ए
कोन षष्ठिकठीयशाखानां मुख्यत्वमिति न भ्रमितव्य
म् ॥ तासां यातयामत्वेन मध्यमकृष्णत्वात् ॥ तत्सम
नन्तरोपस्थितानां कृष्णाढ्यानां सप्तविंशतिशाखानां

तु निरुक्तदोषवत्तया द्विगुणितोच्छिरत्वप्रयोज्योत्तमकृष्णत्वाधिकरणतावत्तयाचन मुख्यत्वम् ॥ अपि तु अवशिष्टानामुक्ततरुवरशिखाकाराणां तादृशपञ्चदशशुक्लयजुः शाखानामेवागतिर्गतिकतया मुख्यत्वंसम्यक् संज्ञाघटीतीति सिद्धम् ॥ न तावदेतावदेवान्यदपिवर्तिं प्रचुरतरमपरम् ॥ तथाहि आदित्यपुराणे अस्याः प्रथमशाखायाः सामवेदउरस्थलम् ॥ ऋग्वेदोमध्यदेशस्तु अथर्वणमयाग्रियुक् ॥ छन्दादीनिह्युपाङ्गानि बृहदारण्यकंशिर इत्यादि ॥ अत्र प्रथमपदस्य मुख्यार्थकतया प्रथमशाखामाध्यन्दिनशाखेत्यर्थः ॥ कुत इति चेत् ॥ निरुक्तवचसातादृशशाखा विशिष्टशुक्लयजुर्वेदस्यैवाङ्गित्वप्रतिपादनात् ॥ अत एव तैत्तिरीयोपनिषदापि तस्य यजुरेव शिर इत्युक्तम् ॥ भाष्यकारैरपि तथैव भाषितम् ॥ तथाहि तस्य शिरस्त्वं प्राधान्यात्॥ प्राधान्यं च सन्निपत्योपकारात् ॥ यजुषा हि हविर्दीयते स्वाहाकारादिनाइत्यादिः ॥ अत्र यजुः पदंनहि उपनिषत् भाष्यकारयोर्यजुर्वेदत्वावच्छिन्नतात्पर्यकम् ॥ अपि तु शुक्लयजुर्वेदविषयकमेव तात्पर्यं गमयति ॥ अन्यथा अस्येत्यारभ्य छन्दादीनीह्युपांगानिबृहदारण्य

कं शिर इत्यंतेनादित्यपुराणीयोक्त वचनेन बृहदारण्य
स्यैव शिरस्त्वेन प्रतिपादनानुपपत्तेः ॥ किं च स
र्वेषु गात्रेषु शिरः प्रधानमिति न्यायाच्च ॥ नि
रुक्तवचसाव्यष्टौ तादृशांगांगी भावकल्पानायां ऋ
गादीनां तदुक्तरीत्या अवांतरांगत्वेपि बृहदारण्यस्यैव
शिरस्त्वोक्त्या शुक्लयजुर्वेदत्वस्यैव मुख्यतावच्छेदक
तयातस्यैव मुख्यत्वमिति सिद्धं ॥ अथापरे वैशंपायनी
ययाजुषाः परमद्वेषादिक लुषितमनीषयापुनः सासूय
या ईर्षयापि ब्रह्मविदग्रसरयोगीश्वरयाज्ञवल्क्य मुनि
वरे गुरुशापेन मध्यान्हेघटिकात्रयंचांडालत्वमारोपयंती
ति यत् तन्मिहिरमरीचि जीवनवीचिनिचयवदत्यंतम
सदेव ॥ कथमितिचेदुच्यते ॥ स्कांदेसनत्कुमारसंहिता
यां कालीखंडे सप्तदशाध्याये ॥ व्यासउवाच॥श्रुतोवेद
विभागस्तुत्वत्तोविस्तरतोमया ॥ अन्योन्य शापकारि
त्वं कथंतेषां बभूवह ॥१॥ मुनीनां श्रोतुमिच्छामित्रूहि
पद्मजनंदन ॥ सनत्कुमारउवाच ॥ श्रुणुसत्यवतीसूनो
मुनीनामत्रविस्तरं ॥ अन्योन्यशापरोषांवा अशपंस्ते
परस्परं ॥ २ ॥ पुरासरस्वतीतीरेपुष्करेसुसमाहिताः॥
मुनयोनियतात्मानो वेदानध्यापयंस्तदा ॥ ३ ॥ याजु

षास्तेगुरून् प्राप्यस्वान् स्वानध्ययनार्थिनः ॥ ब्रह्मच
र्यंपराभूत्वानियमाध्यायिनोभवन् ॥ ४ ॥ वैशंपायनना
मासौ मुनिस्तत्रसुधार्मिकः ॥ याज्ञवल्क्यस्तथाकण्वो
विप्रोमाध्यंदिनाह्वयः ॥ ५ ॥ कात्यायनश्चमेधावीनिय
माध्ययनेरतः ॥ यजूंष्यधीयतां तेषांमुनीनांतुगुरोर्मुखा
त् ॥६॥ गुरुपुत्रस्तदाबालो गुरुशिष्यांतरालके ॥ चचा
रबालश्चापल्यात् खांडिकस्यात्मजोमुने ॥ ७ ॥ तस्यै
वचाभवच्छालो वैशंपायननामकः ॥ वारयामासतंबा
लंकुशैःसंताडयन्पटे ॥ ८ ॥ तदाध्ययनविघ्नोनोमाभूदि
ति विशंकितः ॥ कुशसंताडनादेव बालः पंचत्वमाग
त ॥९॥ ततस्तुखांडिकोदुःखात्प्ररुरोदमहास्वनः ॥ वै
शंपायन संज्ञस्तु ब्रह्महत्यातुरोभवत् ॥ १० ॥ सवैशं
पायनोगत्वाप्रणम्यचरहोगुरुं ॥ प्रसीदभगवन्मह्यं गुरु
द्रोहेविनिष्कृतिं ॥११॥हत्यायाश्चैव बालस्यनिष्कृतिं
प्रकरोम्यहं ॥ तस्यतद्वचनं श्रुत्वा गुरुस्तेषांसखांडि
कः ॥ १२ ॥ उवाच शिष्यं शालंचमाभैषिवच्मितेहि
तं ॥ खांडिकोवाच ॥ याज्ञवल्क्यः सहाध्यायी तथान्ये
द्विजपुंगवाः ॥ १३ ॥ करिष्यंति च मद्वाक्याद्व्रत्या
व्रतमिदन्द्विजाः ॥ याज्ञवल्क्यं समाहूयखांडिक्याहतंगु

रुः ॥ १४ ॥ गुरुरुवाच ॥ वैशंपायन संज्ञस्यमत्छाल
स्यविशेषतः॥ब्रह्महत्याख्यंपापं संप्राप्तंदैवयोगतः १५॥
तन्निष्कृतीं तु तेनैव प्रकुर्वंतुसमाहिताः ॥ तदागुरु
वचः श्रुत्वायाज्ञवल्क्यो ब्रवीन् द्विजः ॥ १६ ॥ कण्व
कात्यायना द्याश्चतथामाध्यंदिनोद्विजः ॥ सत्यमुक्तं तु
भवता गुरुणाचविशेषतः ॥ १७ ॥ वैशंपायनहत्यायाः
व्रताचरणमुत्तमं ॥ कर्ताकर्मफलंभुङ्क्तेअन्येषांतत्रकाक
था॥१८॥ वैशंपायनएवैकः करोतुकथमीदृशाः ॥ इत्थंते
षांवचःश्रुत्वागुरुस्तानशपत्क्रुधा ॥ गुरुरुवाच॥१९॥
येमत्तोधिगतावेदास्तानुद्गीरंतुमाचिरं ॥ तदागुरुवचः
श्रुत्वाआवमुस्तेद्विजास्तदा॥२०॥अथभक्षन्तैतिरीयाह्य
भवन्नामतोमुने ॥ पुनस्तान्गुरुरप्याह चांडालत्वम्
वाप्स्यथ ॥ २१ ॥ इत्युक्ताः गुरुणातेन याज्ञवल्क्या
दयस्तदा ॥ कण्वःकात्यायनश्चैव तथामाध्यंदिनोमु
निः ॥ २२ ॥ जगमुस्तेतपसातोष्यसूर्यंद्वादशवत्सरं ॥
तुष्टुवुर्तियमोपेता याज्ञवल्क्या दयस्तदा ॥ २३ ॥ मुन
यऊचुः ॥ दिवाकरायमहते सवित्रेतेनमोनमः ॥ इत्या
दि ॥ इत्थं संस्तुवतां तेषांप्रादुरासीत्तदारविः ॥ २४ ॥
उवाचवरदोस्मीति याज्ञवल्क्यादिकान्मुनीन् ॥ मुन

यः प्रांजलींबध्वाप्रणिपत्यदिवाकरं ॥२५॥ ऊचुः प्रहृष्ट
मनसोवाक्यमेतत्सुविस्मिताः ॥ मुनयऊचुः ॥ धन्यास्मो
नुग्रहीतास्मो यद्भवान् दृक्पथंगतः ॥ २६ ॥ अथैवगु
रुणाशप्ताश्चांडालत्वेनभास्कर ॥ शापमुक्तिर्भवेद्देवछं
दांस्यन्यानिदेहिनः ॥२७॥ याज्ञवल्क्यमुत्राचेदं भास्क
रः प्रहसन्निव ॥ श्रीभास्करउवाच ॥ नेदंगुरुवचोमि
थ्या भविष्यति कदाचन ॥ २८ ॥ मर्यादांवैकरिष्यामि
प्रसादेनमुदाद्विजाः ॥ निष्कर्माणोवसंत्वेवं मध्यान्हेघटि
कात्रयं ॥ २९ ॥ तस्माच्छापाद्विमुक्ताश्च भवंतोविप्र
सत्तमाः ॥ अयातयामछंदांसिदास्यामिभवतामहं॥३०॥
नैषकालोममाध्याये वाजिरूपेणभोद्विजाः ॥ गृह्णन्तुता
निछंदांसियानिवेतिनतद्गुरुः ॥ ३१ ॥ तथेतितेद्विजाः
सर्वेप्यगृण्यन् भास्कराछ्रुतिं ॥ वाजिरूपेणयस्मात्ते त
स्माद्वाजसनेयिनः ॥ ३२ ॥ समागम्य भवत्तत्रयाज्ञव
ल्क्योमहागुरुः ॥ शिष्यानध्यापयामास पुण्यंवाजसनेय
कं ॥ ३३ ॥ तदृष्ट्वा महदाश्चर्यं सारण्यकमनुत्तमं ॥
कदाचित् समवायोभूत् मुनीनांभावितात्मनां ॥ ३४ ॥
तत्रोपविष्टकोपेन लोगाक्षिःप्रत्यभाषत ॥ अनेनयाज्ञ
वल्क्येन सहासी तुमुलंमम ॥ ३५ ॥ अपःसंस्तभ्यति

द्यामिगुरुशापेन[?] भोद्विजाः ॥ साहंकारंतुतद्वाक्यं याज्ञ
वल्क्योमुनिस्तदा ॥ ३६ ॥ श्रुत्वाप्रोवाचलौगाक्षिं भवा
न् सूत्रकृतांवरः ॥ मच्छाखाप्रत्ययं हित्वाकुतःसूत्रात्म
नोगतिः ॥ ३७ ॥ लौगाक्षिः परमप्रीतो याज्ञवल्क्यमु
वाचह॥ यत्पूर्वभास्करेणोक्तं मध्यान्हेघटिकात्रयं॥३८॥
तस्मादपिविनिर्मुक्ताःपुण्यारण्यस्यवैभवात्॥ इत्युक्त्वा
प्रोक्षयामास अपः स्तम्भोयतज्जलम् ॥३९॥ ततस्तौ
प्रोनिसंयुक्तौ समासीताम् परस्परं ॥ ४० ॥ इत्यादि ॥
तथाचैतादृशशाप विनाशनमवधार्योनार्यवत् कृष्णया
जुषवये यंदुच्यते॥तद्वंध्यापुत्रःसमायाति खपुष्पधृतशे
खरः ॥ मृगांभसिकृतस्नानः शशशृङ्गधनुर्धर इत्यादि व
दलीकमेव ॥ किंचागण्य पुण्यजनक वृहदारण्य पठन
पाठनाद्यपगता खिलकलिकलुषमन सांसुमनसां शुक्
लयजुर्वेदाध्ययनव्रतां महतां ब्रह्मविदग्रसर योगीश्वर
याज्ञवल्क्यमुनिवराणां महदपमानकारण गर्हणाकरणे
नाश्वल शाकल्यादिवत् वलघदनिष्टजनकत्व विशिष्टा
शिष्ठत्वमेव स्पष्टीभवति ॥ अपिच यथा नहि शुक्लयजु
र्वेदवत्तिशुक्लत्वं कृष्णयजुर्वेदवत्ति ॥ तथाकृष्णत्वमपि
शुक्लयजुर्वेदवत्तिनभवति ॥ ब्राह्मणत्वशूद्रत्ववत्॥ तथा

चांडालत्वं अचांडालवृत्तियदि स्यात् तर्हि आचांडालत्व मपि चांडालवृत्तिस्यात् ॥ इत्यलमसदावेशा वकाशेनेति॥इदमंशेअमितजामितैवव्यापादापादनसदनेत्यतए वोपरम्यते ॥ अन्यथा किंगत्रिगोलमुतागविगोलं यदिग विगोलं नहि मयिगोलम् ॥ अगविवगोलं यदितवइष्टं भवतु भवत्यपिसम्प्रतिगोलम्॥इत्यादिवचनजालम्वला देव गलालिङ्गितं भविष्यतीतिभिया अलंकारएवालं कार इतिमन्ये ॥ किञ्चोक्तकालीखण्डे केवलं गणपतिं विहाय शिवविष्णुप्रमुखानामपि सर्वेषां शापसम्बन्धः प्रतीयते ॥ परन्तु नहि तेषां तादृशशापसम्बन्धेन ई श्वरत्वमपहृतं किमुतमुनिवराणामिति ॥ शापोपसंहार स्य तदुत्तरं विद्यमानत्वात् ॥ ननु आदित्यादिपुराणा दिषु एतादृशशापसम्बन्धाप्रदर्शनेन कालीखण्डीयशा पापादनिकेयमाख्यायिका अलीकैवेति चेन्न ॥ अग तिगतिकतया कल्पभेदेन व्यवस्थाभेदस्य कर्तुमुचि तत्वात् ॥ अन्यथा अन्योन्यम्पुराणानां विरोधो अपरि हार्यः स्यात् ॥ तद्विरोधपरिहारस्तु उक्तपूर्वएवावसेयः॥ यस्तुनस्तु इयमाख्यायिका केन चिदाधुनिकेनकल्पिता इति हासादिप्रसिद्धश्रद्धेयाख्यायिका साम्याभावात् ॥

तथाहि वैशम्पायनादि कात्यायनान्तानां पञ्चानां खा ण्डिकशिष्यलोक्तिः विष्णुवराहवामनादित्य भागवतभा रतप्रभृतिपुराणेतिहासेषु अदृष्टचरी ॥ वैशम्पायनकर्तृ ककुशकरणकस्वाध्यायान्तरायीभूत स्वशिशुबधपापाप करणाय गुरुणानियुक्ताः याज्ञवल्क्यादयश्चत्वारः शाल स्नेहानुरोधेनास्माननुयुङ्क्तेयमिति स्वमनसिविचिन्त्य वैशंपायनकृतनिष्कृत्यैव सुपरिहरमिदमेन इति ॥ सए वाचरतित्यपचोचन् ॥ तद्वचः श्रवणजनितामर्षपूर्णः खा ण्डिकश्चत्वारोप्यवादीत् मदधीतन्त्यजतेति ॥ ततस्तै रुद्वान्तेषु यजुः सुपुनरपि शापमदादित्युक्तिस्तु इतरा ख्यायिकाभ्यो विलक्षणैव ॥ किञ्च यत्कर्तृकः शापस्त त्कर्तृकएवोत्छापइति पुराणप्रसिद्धिः प्रकृते तुनतथा ॥ नच प्रबलकर्तृकोत्छापेन दुर्बलकृतशापस्य परिमार्ज नं भवतीति युक्तमेवैतदिति चेन्न ॥ सूर्यापेक्षया दुर्बल स्य लोगाक्षेः उत्छापदानमपि मत्तप्रलपितमेव ॥ इत्थं ष गुरुकृतशापस्य वैय्यर्थ्यं स्वाख्यायिकयैव ख्यापि तमजानन् पूर्वापरावधारणशून्यः श्रीमद्याज्ञवल्क्यशा पविदग्धशाकल्यपक्षपाती अविदग्धोपि आख्यायिका रचनवैदग्ध्यीं मुग्धधीरुदाजहार ॥ यद्येतत्समूलमभवि

ष्यत्तदा हेमाद्रि माधवाभिधैर्निबन्धकारैः कुत्रचनोपा न्याशिष्यम् ॥ तथाचेयमाख्यायिका अधुनिकैः कैश्चि त्कल्पितेति सिद्धम् ॥ पुनरन्ये याज्ञवल्क्यविपक्षपक्षी याः एवमुत्प्रेक्षन्ते तद्यथा याज्ञवल्क्यस्य पूर्ववेदत्यागो त्तरं उत्तरवेदप्राप्तेः पूर्वं अन्तरालकालावच्छेदेन दौ र्ब्राह्मण्यमिति ॥ तदपि वदतोव्याघातवदेव प्रतीयते॥ तथाहि ऋग्वेदैश्चयजुर्वेदैः सामवेदैह्यथर्वणैः ॥ इतिहा सपुराणैश्च सौरैरक्षरमन्त्रतः ॥ इत्येवमादिभिस्तैन स्तूयमानस्तदारविः ॥ इत्यादित्यपुराणगतोत्तरखण्डीय चतुर्थाध्यायस्य वाक्यैस्तस्य वेदवत्वबोधनात् तत्र य जुर्वेदपदेन कठीयशाखानामनुद्धान्तत्वादविरोधः ॥ किं च याज्ञवल्क्यस्ततःप्राह्मभक्तयातवमयोदितम्॥ मयाधी तानिवेदानां सहस्राणियथाक्रमम् ॥ विद्यन्ते हृदये चैव रक्षितानि यथा विधि ॥ गुरुरुवाच ॥ मुच्यतां यत्वया धीतं मत्तोविप्रावमानक ॥ इत्येव मुक्त गुरुणातन्मात्रं विसृजाम्यहम् ॥ एवमुक्त्वा क्षणं ध्यानयोगेन महता स्ततः ॥ चिन्तयित्वायनिश्चित्य वाक्यमेतदुवाचह ॥ ममाप्यलंत्वदाधीतं यन्मयातदिदंद्विज ॥ इत्युक्त्वारु धिराक्तानिसुरूपाणि यजुंषिसः ॥ छर्दयित्वा ददौ त

स्मै ययौच स्वेच्छया मुनिरिति ॥ आदित्यपुराणे दव चोभिरपि प्रत्युतवैशंपायनसहित स्वसहाध्यायिनां स वैषां महायोगबलेन सप्तविंशतिशाखाः समाकृष्यस्वो दरस्थशाखाभिरेकी कृत्ययदोद्वान्तास्तावत्पर्यन्तं अंत रालकालावच्छेदेन तेषामेव दौर्ब्राह्मण्यं वक्तुमुचितम्॥ पुनश्च मुनिवरवान्तानां सप्तविंशतिशाखानान्तीर्थ ग्योनिजनितित्तिरिपक्षिरूपेण भक्षणादपि तेषां उत्तम कृष्णयजुष्ट्वमतिजागरूकतया वरीवर्तितराम् ॥ वैभवं याज्ञवल्क्यस्य कृष्णद्वैपायनादृते ॥ ज्ञातुं समर्थः को न्यः स्यादिति पौराणडिंडिमः ॥ १ ॥ अतएव भगवान् द्वैपायनो द्वापरादौ वेदविभागात्पूर्वमेव सारभूतांशं सूत्रे निधायानन्तरमेवावशिष्टं ऋगादिभागं पैलवैशं पायनादिभ्यो यथाक्रमेण विबभाज ॥ ततो याज्ञवल् क्योपि उत्करोत्या आदित्यान्निजम्पुरुय भागमवाप्येत्य र्थसमर्थनेनाप्युक्तोपलब्धार्था सार्थकैव समर्थितेत्यव धेयम् ॥ एवञ्च शुक्लयजुर्वेदत्वस्यैव मुख्यतावच्छे दकतया तद्विशिष्टः शुक्ल एव मुख्य इति सिद्धम् ॥ ननु लाघवात् यजुर्वेदत्वस्यानुगततया मुख्यतावच्छे दकत्वे कथं तादृश गुरुभूतस्य शुक्ल यजुर्वेदत्वस्य

मुख्यतावच्छेदकत्वमित्यपि न भ्रमितव्यम् ॥ अन्यू नानतिरिक्तवृत्तिधर्मस्यैवावच्छेदकत्वमिति नियमात् ॥ केवल यजुर्वेदत्वस्यामुख्यकृष्णयजुर्वेदवृत्तित्वेनानव च्छेदकतया शुक्लयजुर्वेदत्वस्यैव समष्टिव्यष्टिवेदवृ त्तित्वेन मुख्यतान्यूनानतिरिक्त वृत्तित्वेनावच्छेदकत्वं वक्तव्यम् ॥ अत एव तार्किकवर्यैरपि द्रव्यत्वम्विहाय धुमत्वस्यैव हेतुतावच्छेदकत्वमंगीकृतम् ॥ एतेन कृष्ण यजुर्वेदत्वस्य मुख्यतावच्छेदकत्वं आर्थिकमेव प्रत्या ख्यातं वेदितव्यम् ॥ ननु वैशंपायनएवैको निष्णा तो यजुषामुतेति वचनगत एकशब्दः ॥ एकेमुख्या न्यकेवलाः इत्यनुशासनतः मुख्यत्ववाचकः ॥ तथाच वै शंपायनयुजुषएव मुख्यत्वेन कथंशुक्लयजुर्वेदस्यैव मु ख्यत्वमिति चेदुच्यते ॥ अत्रवेदसंप्रदायोद्विविधः ॥ ब्रह्मसंप्रदायःआदित्यसंप्रदायश्च॥तत्रब्रह्मसंप्रदायापेक्ष या आदित्यसंप्रदायस्यैव मुख्यत्वम् ॥ तस्याऽयातयाम त्वेन यावत्कर्म ब्रह्मप्रतिपादकत्वात् ॥ अत एव जाबा लसंहितायां प्रथमाध्याये सूतोवाच ॥ देवरातस्तपस्ते पेपूर्णमब्दशतंपुरा ॥ पुत्रार्थंसुमहद्घोरं धर्मवृद्धि करं परं ॥ १ ॥ रविमंडल मध्येसौ प्रादुरासीत्कृपाकरः ॥

समग्राम्नाय पुरुषः सहस्त्रतपन द्युतिः ॥ २ ॥ तं
दृष्ट्वासहसोत्थाय प्रहर्षोत्फुल्लमानसः ॥ ननामदंड
वद्भूमौ देवरातोमहामुनिः ॥ ३ ॥ कृतांजलिपुटः सम्य
क्भक्त्यापरमयायुतः ॥ वैदिकैस्तांत्रिकैस्तोत्रैस्तोतुं स
मुपचक्रमे ॥ ४ ॥ देवरातउ०॥ एवंस्तुतस्तदादेवोदे
वरातेन धीमता ॥ उवाच परमप्रीतोवाञ्छितंपरिपूर
यन् ॥५॥ वेदपुरुषउवाच॥ प्रसन्नोस्मि महाभाग वरं
वृणुयथेप्सितम् ॥ तच्छ्रुत्वावचनंप्राह देवरातो महामु
निः ॥ ६ ॥ भवानेवहिमत्पुत्रो भूयादितिवृणेवरं ॥ त
थेत्युक्त्वासभगवान् स्वस्वरुपोभवत्तदा ॥ ७ ॥ ब्र
ह्मामखंसमारेभे मुनिमण्डल मंडितः ॥ देवरातोपितत्रा
सीत् चिंतयन्देवआपितं ॥ ८ ॥ गार्हपत्यात्समुत्प
न्नो बालकोद्भुतदर्शनः ॥ देवरातस्तुतंबालं समालिं
ग्य प्रहर्षितः ॥ ९ ॥ तदा ब्रह्मादयोदेवाःप्रशशंसुर्मु
दान्विताः ॥ आशिषः प्रददुः सर्वे बालकं पावको
पमम् ॥ १० ॥ जातकर्मादि संस्काराश्चक्रुस्तस्य
मुदान्विताः ॥ दृष्ट्वाब्रह्मायतं बालं योगलक्षणलक्षि
तम् ॥ ११ ॥ योगीश्वरोयाज्ञवल्क्य इतिनामाकरोन्मु
दा ॥ उपनीतं तु तंपश्चात्सावित्रींसरहस्यकाम् ॥ १२ ॥

सर्वन्तन्महिमानंच कृपयासमुपादिशत्॥ वित्रइ्याघयाज्ञ
वल्क्योवेदस्या ध्ययनेरतः॥१३॥ गुर्वग्निसेवनपरोब्रह्म
चर्यंवहन् शुचिः॥ कदाचिद्दैवयोगेन वैशम्पायन देशि
कः ॥ १४ ॥ बालहत्याहृवयं पापमवाप दुषिताशयः ।
शिष्यानज्ञापयामासकर्तुं पापापहंव्रतम् ॥ १५ ॥ या
ज्ञवल्क्योपि तत्दृष्ट्वाप्रवदद्गुरुसन्निधौ ॥ एक एवा
हमत्रालंबहुभि क्लिश्यतेव्रथा ॥ १६ ॥ तच्छुत्वावचनं
तस्य सहसामर्पितोगुरुः ॥ गुरुरुवाच ॥ त्यजाशु म
दधीतं यद्गच्छविप्रावमानक ॥१७॥ योगीश्वरोपित
त्ज्ञात्वा योगेनमहतावृतः ॥ यजुंषिरुधिराक्तानि चछ
र्द तरसान्वितः॥१८ ॥ प्रसाद्यदेवदेवेशं भास्करंवे
दविग्रहं ॥ यजुंपितानिमेदेहि यानिसंति नमेगुरो
॥ १९ ॥ एवमुक्तोददौतस्मै वाजिरूपधरोरविः ॥ छं
दांस्य यातयामानि यानिवेत्तिनतद्गुरुः ॥ २० ॥ या
ज्ञवल्क्यस्ततश्चक्रे शाखाःपंचाधिकादश ॥ कण्वाद्याः
सुमहाभागाः शुक्लास्ताः परिकीर्तिताः ॥ २१ ॥ आ
दित्यसंप्रदायोयं याज्ञवल्क्यप्रकाशितः ॥ ब्रह्मणः सं
प्रदायोपि प्रोच्यतेश्रोयतांद्विजाः ॥ २२ ॥ सूतोवाच
सृष्टिकालेहयग्रीवो धर्मंद्वेपीमहाबलः ॥ वेदमक्ष्यार्थमा

यातः पातालात्त्वरयान्वितः ॥ २३ ॥ पूर्वंतदागमाद्त्र ह्मा सारभूतंयजुर्गणम् शुक्लमयातयामंच रविमध्या प्यचिक्षिपे ॥ २४ ॥ दैत्योयभक्षयित्वातान् पुनः पातालमाविशत् ॥ दैत्यंविदार्य तान्वेदान् वेधसेप्रददौह रिः ॥ २५ ॥ वेधाः पुनर्हरिध्यात्वा चतुर्भिर्वदनैःस्फुटं ॥ वशिष्ठप्रमुखान् पुत्रान्पाठयामासयत्नतः ॥२६॥ ऋग्वेदक्रमतः सर्वान् तेपिसर्वेमहर्षयः ॥ पाठयामासतुः पुत्रान्पौत्रान्वेदविवर्धये॥२७॥ द्वापारादौहरिः साक्षात्पाराशर्योमहातपाः ॥ अवतीर्याथतान्वेदान् ऋषिभ्योविबभाजह ॥ २८ ॥ पैलायसंहितामाद्यांऋग्वेदाख्यामुवाच ह ॥ वैशंपायनसंज्ञाय यजुर्वेदाख्यसंहिताम् ॥ २९ ॥ तामेवयाज्ञवल्क्येनवांतांदृष्ट्वा मुनिस्तदा ॥ शिष्यानज्ञापयामास तित्तिरत्वेन गृह्यतां ॥ ३० ॥ तेसर्वे तित्तिराभूत्वाजग्धु स्तानियजूंषिच॥ तैत्तिरीयास्तुतेसर्वे ह्यभवन्द्विजसत्तमाः ॥ ३१ ॥ मलिनाः कृष्णवर्णाश्च रक्ताक्षादूषिताशयाः ॥ द्रविडाश्चांध्रजातीयाः कावेरीतीरवासिनः ॥३२॥ व्यासाज्ञयापुनः सोपि वैशंपायननामकः ॥ द्रुतस्त्याश्रममागच्छ दृषिसंघैःसमावृतः ॥ ३३ ॥ दृत्यृतोमुनिना तेनपाठयामासतत्सुतान् ॥ रावणप्रमु

खान् सर्वान्यातयामंयजुर्गणम् ॥ ३४ ॥ ब्रह्मणः सं
प्रदायोयंव्यास संदर्शितोभवत् ॥ विभकस्यैववेदस्यसं
प्रदायोद्विधामतः॥ ३५ ॥ ब्रह्मणः संप्रदायस्तु आदि
त्यस्य तथापरः ॥ अयातयामसंज्ञोयं कृत्स्नकर्मप्रकाश
कः ॥ ३६ ॥ यावद्ब्रह्मप्रकाशश्च रविरूपश्चयोम
तः ॥ ब्रह्मणः संप्रदायस्तु कृष्णत्वान्नतथा मत इति ॥
एवं च यावत्कर्म ब्रह्मप्रकाशकतया अयातयामत्वेन च
ब्रह्मणः सम्प्रदायापेक्षया आदित्यसम्प्रदायस्यैव मुख्य
त्वमिति सिद्धम्॥एवमात्मपुराणेपि चतुर्थाध्याये॥ हयग्री
वअश्विनीकुमारसम्वादे॥हयग्रीवउवाच॥हतेमयित्रिलो
कीस्था ब्राह्मणाभयमागताः ॥ ब्रह्मविद्यां नवक्ष्यन्तिपु
त्रायापिप्रियायच॥ १ ॥ सामिवक्ष्यन्ति वै केचित् कौ
पीतकि मुखाद्विजाः ॥ एकैकस्यैववा केचित् प्रवक्ष्यन्ति
द्विजोत्तमाः ॥ २ ॥ इन्द्राद्धुर्भयमागम्य कुलदेवप्रसाद
तः ॥ याज्ञवल्क्यं विहायैकं द्विजं वाजसनेयकम् ॥३॥
सूर्यशिष्यं माहात्मानं सूर्यवद्दीप्ततेजसम् ॥ यजुंषिश्वे
तरूपाणि तेनेमानिमहीतले ॥ ४ ॥ याज्ञवल्क्यस्यना
मैकं धारयिष्यन्ति सर्वतः॥ इतिब्रुवाणस्य मुनेर्हयग्री
वस्य देवराट् ॥ शिरोन्यपातयद्भूमौ वज्रेण शतपर्व

णा ॥ तत्रदध्यङ्ङ्हयग्रीवः छिद्यमानेस्वमस्तके ॥ याज्ञ
वल्क्यं रवेः शिष्यमूचे वाजसनेयकम् ॥ वक्तारं ब्रह्मवि
द्याया अभीतं शक्तोपि च ॥ इत्यादि ॥ एवं चात्रापि
याज्ञवल्क्यप्रकाशित शुक्लयजुर्वेदस्यैव यावद्ब्रह्मप्र
काशकतया मुख्यत्वमाविष्कृतम् ॥ अपिच पारमेश्वर
संहितायां परमेश्वरोप्येवमेवोदाजहार ॥ महतो वेदवृ
क्षस्य वासुदेवस्य मुख्यतः ॥ प्रतिपादकतासिद्धा मू
लवेदाख्ययाद्विजाः ॥ १ ॥ मन्त्रैःप्रथमशाखोक्तैः पञ्च
रात्रोदितैरपि ॥ मूलमन्त्रेण च तथा पुंसूक्तेनहरिं य
जेदिति ॥ अत्र प्रथमशाखामाध्यन्दिनशाखा इत्यर्थः
पाद्मे तु ॥ सात्विकन्तु यजुः शुक्ल मतः प्रथममुच्यते
इत्यादि ॥ पञ्चरात्रतन्त्रेपि चतुर्थपादगतविंशाध्याये ॥
पञ्चरात्रोक्तमार्गेण मन्त्रलब्धान्तरात्मनि ॥ दीक्षयित्वा
यथान्यायं चक्रेवारिजमण्डले ॥ १ ॥ आगतान् दीक्षि
तान् ब्रह्माकर्तव्यमिदमादिशत् ॥ काण्वीमाध्यन्दिनी
शाखे शाखा स्वन्तर्हि ते उभे ॥ अधीत्यमूलशाखेद्वेनि
षेकादीश्चसंस्कृतीः ॥ ताभ्यामेवानुतिष्ठध्वं सोमयागा
दिकर्मचेत्यादि ॥ अन्यच्च ॥ यथा शुक्ल यजुर्वेदो वे
दानां प्रथमो भवत् ॥ तथा कात्यायनं सूत्रं सूत्राणाम

भवन्मुखमिति ॥ अपि च अथर्वणोपनिषदपि इदमेवा
वेदयति ॥ तथाहि ॥ अथहैनं पिप्पलादोङ्गिराः सनत्
कुमारश्चाथर्वणमुपेत्योचुः ॥ भगवन्नादौ को वेदः प्रयु
क्तः॥कोवा अयातयामः॥कोवा विष्णुदैवत्यः॥कोवाकृष्ण
कर्मब्रह्मप्रतिपादकः॥ कः स्विद्देवर्षीणां प्रियदइति ॥ स
तेभ्योथर्वा प्रत्युवाच ॥ भगवतो नारायणस्य निश्वास
रूपेणाभिव्यक्तः शुक्लयजुर्वेद एव एको अयातयामः
सर्वोपैलाय भवति ॥ स एव विष्णुदैवत्यो विष्णुप्रीण
नाय भवति ॥ स कृत्स्नकर्मब्रह्मप्रतिपादकस्तत्प्रतिपा
दनाय भवति॥ स एव देवर्षीणां प्रीयस्तत्प्रीणनाय भ
वति ॥ तएनं पुनरूचुः भगवन् कःस्विदेकायन इति॥
सतेभ्यः प्रत्युवाच॥ तत्र शौक्लियानि यजूंषिद्विसहस्रा
णितान्येव एकायनानीत्याचक्षते ॥ अथहैनमेवमूचुः॥
भगवन्नेकायने किं प्रतिपाद्यमिति ॥ तान्होवाच अथ
र्वा॥साकारं ब्रह्मप्रतिपाद्यमिति ॥ कोवासाकार इति ॥
असोयोवः सर्पति ॥ सहस्रशीर्षा पुरुषः ॥ असौसाकार
इति ॥ अथ खल्वेतयोः कः उपास्य इति ॥ एतदन्य
तरोपासने किं स्यादिति ॥ वेदाहमेतं पुरुषम् ॥ ना
न्यः पन्थाविद्यतेऽयनायेति ॥ तल्लोकमयनममृतत्वमे

ति ॥ अथतएनमूचुर्भगवन् उपनिषत्सारं ब्रूहीति ॥ सहोवाच बृहदारण्यकमुपनिषत्सारमिति ॥ तत्र किं प्रतिपाद्यमिति ॥ अद्वितीयमेकं ब्रह्मप्रतिपाद्यमिति ॥ तत्कथमुपास्यमिति सोहमस्मीत्युपास्यम् ॥ एवमुपासने किं स्यादिति तादात्म्यमिति ॥ नसपुनरावर्तते नसपुनरावर्ततेइति॥ इयमुपनिषदतिरोहितार्थकैव॥ तथाचात्र शुक्लयजुर्वेदएव सर्वार्थप्रतिपादकतया मुख्यत्वे नाभिमत इति सिद्धम् ॥ किञ्च श्राद्धमयूखेमैत्रायणीय संहितारम्भः ॥ इषेत्वाभूतायत्वावायवस्थदेवोवः सवितेत्यादि ॥ अत्र इषेत्वोर्जेत्वावायवस्थोपायवस्थेत्यादि कृष्णयजुः प्रतीकमगृहीत्वाइषेत्वार्जेत्वावायवस्थदेवोवइतिशुक्लयजुर्वेदप्रतीकग्रहणेनापि मुख्यत्वं ॥ अपिचयाज्ञवल्क्यप्राप्तानां शुक्लयजुषां सतेजस्कत्व शुक्लत्वाभ्यांमुख्यत्वमागमोपि साक्षादेवावगमयति ॥ तथाहि आदित्यानीमानिशुक्लानि यजूंषिवाजसयेन याज्ञवल्क्येनाख्यायन्ते इति ॥ तदर्थश्च आदित्यात् प्राप्तानि आदित्यानि ॥ इमानि कण्वादिपञ्चदशशाखारूपाणि शुक्लानि शुद्धानि यजूंषि व्यासेन वेदविभागात्पूर्वमेव सारभूतत्वात् स्थापितानि॥ वाजसनेयेन

वाजसनिपुत्रेण ॥ यद्वा वाजस्यान्नस्यसनिर्दानं यस्य सः वाजसनिः देवरातः॥ अन्नम्वैवाजइति श्रुतेः॥ षणु दानइति धातुपाठाच्च ॥ सर्वधातुभ्य इति औणादि रिः प्रत्ययः तस्यापत्यं पुमान् वाजसनेयस्तेन वाजस नेयेन याज्ञवल्केन यज्ञानां यज्ञकांडानां वल्क्यः वक्ता याज्ञवल्क्यः॥पृषोदरादित्वाद्वल्कशब्दःसाधुः॥देवरातोम हाकर्मठः तस्यापत्यम्पुमान् याज्ञवल्क्यः ॥ गर्गादिभ्यो यञिति गोत्रापत्यार्थे यञ्॥ तेनयाज्ञवल्क्येनतन्नाम्ना मुनिनेति यावत् ॥ आख्यायन्ते कण्वादिपञ्चदशशि ष्येभ्यो उपदिश्यन्त इत्यर्थः ॥ एवमेतासां कण्वादिप ञ्चदशशाखानां शुक्लत्वं प्रतिपादयन्त्या श्रुत्या वैशं पायनीययजुषां कृष्णत्वमार्थिकमेव व्यक्तम्भवति ॥ यथा उभयोरेकः पण्डित इत्युक्त्या आर्थिकमेवेतरस्य मूर्खत्वमितिवत् ॥ नागाभट्टैरपि तथैव व्याख्यातम्॥ शुक्लानि ब्राह्मणैर्व्यामिश्रितानि शुद्धानीति यावत् ॥ श्रीमद्भगवत्पूज्यपादआचार्यचरणैरपि शुक्लानि शुद्धा नीत्यभाणि ॥ एवं चैतेषां शुद्धत्वं वदद्भ्यांनागाभट्टभ गवत्पादाभ्यां अन्यस्य कृष्णत्वमर्थादेवाविष्कृतं भव ति ॥ वेदभाष्यकारैरपि शुक्लानीत्यस्य शुद्धानीत्यर्थः

कृतः ॥ एवं स्मृतिरपि ॥ बुद्धिमालिन्यहेतुत्वात्तद्यजुः कृष्णमीर्यते ॥ व्यवस्थितिकरं यत्तद्यजुः शुक्लमितीर्यते इति ॥ महीधरभाष्येपि ॥ शुक्लं कृष्णमिति द्वेधायजुश्चसमुदाहृतम् ॥ शुक्लं वाजसनेयं यत्कृष्णन्तु तैत्तिरीयकमिति ॥ श्रीमद्भागवतेपि ॥ यजूंषितित्तिरा भूत्वा तल्लोलुपतयाऽऽदुः ॥ पुनस्तत्रैव ॥ यजूंष्ययातयामानिमुनयेदात्प्रसादतः इति महाभारते भविष्यत्कथाप्रसङ्गेप्ययातयामत्वमेतेषामेव सम्पादितं॥ अयातयामानितु भानुगुप्तान्यन्यानि जातानि तुनीरसानि॥ यजूंषितेषामथयाज्ञवल्क्यो ह्ययातयामानि रवेरवापेति ॥ अपि च यजुषां वायुर्देवता तदेव जोतिस्त्रैष्टुभं छन्दोन्तरिक्षं स्थानम् ॥ इषेत्वोर्जेत्वा वायवस्थदेवोव सविताप्रापयतु श्रेष्ठतमायेत्येवमादिं कृत्वा यजुर्वेदमधीयत इत्याथर्वणिकगोपथब्राह्मणे चतुर्णामपि वेदानां दैवताद्यारम्भस्य रूपान्तरप्रदर्शनपरे यजुर्वेदस्य वाजसनेयीशाखापाठानुसारेणैव प्रदर्शनादपि शुक्लयजुषएव मुख्यत्वं जागर्ति ॥ वरीवर्ति पुनरन्यमहद्विनिगमकम् ॥ तथाहि ॥ यजुर्वेदस्य मूलं हि भेदोमाध्यन्दिनीयकः ॥ सर्वानुक्रमणीतस्य कात्यायन कृतातुया ॥

व्याख्यान्तस्यास्तुहोलीरः कुर्वे नत्वा गणाधिपम् ॥ वि
लोक्य बहूसूत्राणि भाष्याणि विविधानिचेति ॥ अ
त्रापि मूलवचोक्त्या प्रकृतशाखाया एव मुख्यत्वं रुचिर
तयैवादर्शितम् ॥ अपि च सर्वानुक्रमसूत्रेपि वाजस
नेयके यजुर्वेदाम्नायेत्यत्र वेदपदेनैव सिद्धेर्थे पुनराम्ना
यपदं आम्नाय श्रुतिमुख्ययोरिति नियमेन मुख्यार्थक
मेव ॥ अतएव ब्रह्ममालाकारोप्येयमेवावादीत् ॥ तथा
हि माध्यन्दिनयजुर्वेदः खंब्रह्मान्त उदाहृतः ॥ ता
रपूर्वं हि त्रिगुणं नान्यसाखासुमुख्यतेति ॥ परा
शरोपितयैवोदाजहार ॥ ओंकार पूर्वं त्रिगुणं त्र्य
क्षरं च त्रिदैवतम् ॥ त्रिषु ब्रह्मसु च प्रोक्तं त्रिः
प्रोक्तं त्रिः प्रतिष्ठितम् ॥ सत्वं रजस्तमश्चेति त्रि
गुणं तेन संस्मृतम् ॥ माध्यन्दिनीयशाखायां यजुर्वेदे
पठन्तिहि ॥ इत्यादि ॥ किञ्च गायत्रीमन्त्रसारात्तु तै
त्तिरीयोद्विजोधिकः ॥ ऋग्वेदीच ततः श्रेष्ठ सामगस्त्वे
कदेशतः ॥ ततस्त्वयातया मायां शाखायां शोक्षितो
द्विजः ॥ तस्मैहव्यानिकव्यानि दातव्यानि द्विजातये ॥
वाजिनेदत्तमेकन्तु तत्कोटि गुणितं भवेत् ॥ वाजेवाजे
वत इत्यस्य मन्त्रस्यार्थो मया श्रुतः ॥ भुक्तेष्वन्येषु

विप्रेषु वाजिब्राह्मणभावना ॥ वन्दनेच विसर्गे च केचि
दिच्छन्ति नित्यशः ॥ इत्यादिस्त्यपुराणेपि स्पष्टमेव ॥
ननु वाजेवाजे इति मन्त्रस्तदर्थश्च कथमिति चेदुच्य
ते ॥ मन्त्रः वाजेवाजेवतवाजिनो धनेषु विप्रा अमृता
ऋतज्ञाः ॥ आस्यमध्वः पिबतमादयध्वं तृप्तायातपथि
भिर्देवयानैः ॥ अस्यार्थः ॥ हे विप्राः सूक्ष्ममतयः ऋ
तज्ञाः ब्रह्मवादिनः अतएवाम्मृताः अमरणधर्माणः जी
वन्मुक्ता इत्यर्थः ॥ तदुक्तं बृहदारण्यभाष्ये मधुकां
डीयदृस्यबालाकिवाक्ये चतुर्थाध्याये श्रीमच्छंकराचा
र्यैः ॥ अहोबृहदारण्याध्ययनवतां माध्यन्दिनीयानां अ
ध्यनमात्रेणैव जीवन्मुक्ततेति ॥ वाजिनः वाजसनेयो
शाखाध्यायिनः माध्यन्दिनाः हेब्राह्मणाः नोऽस्माकंहवि
र्दातृणामिति यावत् ॥ अवतपरिपालयत ॥ अवरक्षणे
अस्मात् प्रार्थनायां लोटिमध्यमपुरुषबहुवचनम् ।
अस्य प्रकृतस्य प्रत्यक्षश्राद्धस्य मध्वः मधूनिहविम्वि
इति यावत् ॥ पिबतपानं कुरुतमक्षयध्वमित्यर्थः ॥
अतोमादयध्वंमतामवत पश्चात्तृप्ताः सन्तः देवयानैः
पथिभिर्मार्गैः यातगच्छतेति मन्त्रार्थः ॥ नचात्र वा
जिशब्दस्य वाजसनेयीशाखापरत्वे प्रमाणाभावः शं

क्यः ॥ वाजिनस्तेसमाख्याता इत्यादि विष्णुपुराणवा
क्यस्योक्तपूर्वत्वात् ॥ अतएव श्रीमच्छंकराचार्यैर्बृह
दारण्यभाष्ये योहवैज्येष्ठं च श्रेष्ठञ्चेति कण्डिकाव्या
ख्यानावसरे प्राणोपासकस्य ज्येष्ठत्वेन श्रेष्ठत्वमुक्तम्॥
लोकेपि योज्येष्ठत्वेन श्रेष्ठः सएव पूज्योदरीदृश्यते ॥
तथा चोक्तानेकश्रुतिस्मृतिपुराणादि प्रमाणालंकृतप्र
कृतशाखाविशिष्टशिष्टस्यैवान्यशाखा विशिष्टशिष्टैर्हव्य
कव्यादिषु जैष्ठ्यश्रैष्ठ्याभ्यामभ्यर्हितत्वेनाऽवश्यं पूज्यत
या अन्नदानादिभिरेव कर्मसाफल्यम् ॥ अन्यथा ता
न्हित्वाभोजयेदन्यान् हव्यकव्येषु नारकी इत्यादिदोष
कीर्तनात् ॥ किञ्चान्यशाखिभिः स्वशाखियेषु वाजि
त्वमारोप्यान्नदानादिभिर्हव्यकव्यादिषु पूजितेषु सत्सु
तत्कर्मनिरर्थकमेव प्रत्युतोक्तरीत्यातिशयदोषजनक
मेवेत्यवधेयम् ॥ तच्छाद्धं तु माध्वश्राद्धवद्भवतीत्यपि
बोध्यम् ॥ एवञ्चोक्तसम्प्रदायद्वये आदित्यसाम्प्रदा
यस्यैव ज्येष्ठत्वेन श्रैष्ठ्यात् शुक्लयजुर्वेदस्यैव मुख्यत्व
मिति सिद्धम् ॥ ननु वैशम्पायनएवैको इत्यत्र एवका
रस्येतरव्यावर्तकतया वैशम्पायनातिरिक्तस्य मुख्य
त्वाभावात्कथम्भवद्वेदस्यैव मुख्यत्वेन तद्विशिष्टस्याभ्य

भ्यर्हितत्वमिति चेदुच्यते ॥ मुख्यामुख्यवेदसम्प्रदा
यद्वये पूर्वं सर्वज्ञेन ब्रह्मणापातालतलतः हयग्रीवाग
मनात् प्रागेव पञ्चदशशाखात्मकं शुक्लयजुर्भागो
भानौ निहितः ॥ पूर्वं तदागमाद्ब्रह्मासारभूतं यजुर्ग
णम् ॥ शुक्लमयातयामञ्च रविमध्याप्यचिक्षिपे इति
जाबालसंहिता वचनात् ॥ तदुत्तरमिति चिरकालेन
द्वापराधिकरणकपाराशरकर्तृकवेदविभागावसरेपि सा
रभागस्य भानौस्थापनोत्तरमेव अवशिष्ट यजु
र्भागः व्यासेन वैशंपायनायपाठितः नात्यायेति
अत स्तस्मिन्नेवतस्यमुख्यत्वं ॥ अन्यथा सर्वा
शेमुख्यत्वे तु याज्ञवल्क्याधिकृतादित्यसांप्रदायेपि त
स्य मुख्यत्वापत्तिरिति प्रदर्शितवाक्यानिव्याकुर्त्यु रन् ॥
किं च निष्णातो यजुषामुतेति अप्ययंकेन उतशब्देने
वमेवावेद्यते ॥ अपि च तस्मिनंशेतस्य मुख्यत्वेपि न
हितदीयवेदस्य मुख्यत्वं तेनवचसाऽवगम्यते ॥ तस्य
यातयामत्वेन कृष्णत्वात् ॥ तद्वचनघटक मुख्यार्थक
स्य एकशब्दस्य वैशंपायनविशेषणत्वाच्च ॥ अतस्त
द्वचन घटकयजुःपदमपि कृष्णयजुपरं ॥ एवंचानेकश्रुति
स्मृतिपुराणादि प्रमाणगणभूयिष्ठाणामुक्ताखिलास्या

यिकानांउक्त संप्रदायद्वयेन मुख्यामुख्य शुक्लकृष्णे
तिअंशद्वयवान् यजुर्वेदभागोस्तीतितात्पर्यं ॥ न तु या
ज्ञवल्क्यस्य वैशंपायन शिष्यत्वेनामुख्यत्वंतद्गुरुत्वेन
वैशंपायनस्य मुख्यत्वमिति ॥ अन्यथा वक्षमाण आ
दित्यपुराणीय याज्ञवल्क्या ष्टोत्तरशतनामघटकं कृष्ण
द्वैपायना चार्यैतिनामवैयर्थ्यमापद्यते त्यवधेयं ॥
तथा चैतावताप्रबंधेन शुक्लयजुर्वेदस्य ऋग्वेदादिभ्य
सामान्यतः मुख्यत्वं स्थिरीकृतं ॥ इतः परंतु स्थूणानि
खननन्यायेन कर्मोपासना ज्ञानेतिकांडत्रया त्मके वेदे
पिविशिष्यतस्यैवमुख्यत्वंप्रतिपाद्यते ॥ अथप्रोक्तरीत्या
अयातयामस्य शुक्लयजुर्वेदस्यैव मुख्यत्वे नश्रेष्ठ्यात् प्र
कृतशाखा विशिष्टशिष्टस्यैवाग्रपूज्यत्वेन प्रथमंत्राधिकारः॥
एवं सकलेष्टापूर्तादिकर्म सुतथायावत्प्रकृति विकृतिया
गादिकर्मसु च यथोक्तकुंडमंडपाधिकरणक दक्षिणद्वा
रीयअध्वर्यु कर्माधिकारोपि मुख्यतयातेषामेवातिस्फु
टतरोपरीवर्ति ॥ तदुक्तंमात्स्यकुंडमंडप प्रकरणे ॥ ब
ह्वृचौपुरतस्थाप्यौ दक्षिणेतु यजुर्वेदौ ॥ सामगौपश्चि
मेतद्वत् उत्तरेचाप्यथर्वणौ ॥ कौर्मेपि ॥ पूर्वेणऋग्वेदविदौ
भवेताम् ॥ यजुर्विदौदक्षिणतश्चकार्यौ स्थाप्यौद्विजौ

समाविदो तुपश्चादाथर्वणावुत्तरतश्चक्रयौ ॥ किंच त
ल्लक्षणमप्युच्यते ॥ अथर्विजोवेदविदश्चकार्थाः सुरू
पवेषान्वयशीलयुक्ताः ॥ विधानदक्षाः पटवोनुकूलायेचा
र्यदेशप्रभवाद्विजेंद्राः॥ १ ॥ गुरुश्चवेदार्थविदार्यदेशसमु
द्भवःशीलगुणानुरुपः ॥ कार्यपुराणाभिरतोथदक्षः प्रस
न्नगंभीर सरस्वतीकः ॥ २ ॥ अत्रेववैशंपायनी यकृ
ष्णयाजुषायजुषा। अध्वर्यवमितिश्रुत्यापूर्वयजुभिरस्मा
भिरेवसर्वकुंडमंडपि यदक्षणद्वारिअधिकारिभिर्भाव्यमि
ति संगिरंते ॥ तन्नसंगछते कुत इति चेत्तेषां पूर्वत्वा
भाववत्ववां ताशित्वेन च विशिष्टकृष्णत्व विशिष्टतया
शुक्लयजुर्वेद विशिष्टशिष्टैरना दरणीयतयाचायातया
मत्वनिरतिशय शुद्धत्वपूर्वत्वादि विशिष्टशिष्टानामेव
पूर्वाधिकारस्तेषांत्वपूर्वत्वेति ॥ नेदमाभिमानिकतया
वदामः किं तु प्रमाणगणबलादेवनिगद्यते ॥ इदमं
शे तुप्रचुरतग्रंथ परिचयवद्भिर्विद्वद्भिरस्म च्छाखाविशि
ष्टशिष्टैर्विरचितव्यवस्था साहायेन मयायथोपलब्ध
कतिपयग्रंथसंमतयः प्रदर्श्यंते ॥ तत्रप्रतिष्ठा वासुदे
व्यांकुंडमंडपीय दक्षिणद्वारेहोमकर्तारौतेतिरोयावेवव
रणीयौ ॥ तच्छाखायां सकलप्रधानहोममंत्राणांपाठात्॥

माध्यंदिन मंत्राणां एतद्ग्रंथोक्तप्रधानत्वाभावात् ॥
जापकौतुमाध्यंदिन तैत्तिरीयावुभावपिवरणीयौ ॥ त्र्यु
चंकूष्मांडसूक्तंमाध्यंदिनामेव ॥ तैतिरीयाणांतुइमारुद्रा
स्थिरधन्वने इति सूक्तं वर्तते ॥ जापकसूक्तग्रंथेउभयोः
पाठादुभयोरधिकारः ॥ प्रतिष्ठाहेमाद्रौ दक्षिणकुंडेऋ
त्विजौतैतिरीयावेव तच्छाखायां हेमाद्युक्यावत्प्रधान
होमत्वात् ॥ जापकावपितावेव जापकसूक्तेत्व मग्ने रु
द्रा इति सोमोत्यजेति स्वकल्जापक सूक्तपाठात् ॥
ब्रह्म विदान्योतिपर मितितैतिरीयंऋचंवाचमि
तिमाध्यंदिनीयमितिउभयोरधिकारं बोधयति अतः
प्रकृत ग्रन्थः उभयोरपि द्वारपालत्वबोधकः ॥
दानकमलाकरेशाक्तं रौद्रमितिकारिकामादाय तद्दु
क्तप्रतीकानि च प्रहित्वा एतानि तैतिरीयाणामिति
तात्पर्यवतात्प्रकृतग्रन्थेनोक्तमतस्तैतिरीयाणामेव ॥ दा
नदिनकरद्योते तु सकलं मधुपर्कादिजपान्तमनुष्ठानं
तैतिरीयाणामेव निगदितम् ॥ पूर्तकमलाकरे दक्षिण
द्वारपालौ माध्यन्दिनावेव ऋचं वाचमित्याध्यायस्य
पाठात् तथा जापकौ तु तैतिरीयावेव जापकसूक्तस्यत
च्छाखोक्तत्वान्न माध्यन्दिनावित्यभिप्रायः ॥ दानकम

लाकरे कातीयमधुपर्कानुष्ठानमुक्त्वा अग्रे माध्यन्दि
नीयद्वारपालसूक्तान्युक्त्वा जापकसूक्तमपि ऋचंवाच
मिति तच्छाखीयमेवोक्तं तथाहीममन्त्रजप्यानि सूक्ता
निमाध्यंदिनानामेवकुत इति चेद्ग्रहहोमारंभे आकृ
ष्णेनेत्युपक्रमात् ॥ चंद्रस्यइमंदेवा इतिमन्त्रउक्तः ॥
अधिदेवतानां होमारंभेत्र्यम्बकमित्युपक्रमात् ॥ प्रत्य
धिदेवतानांहोमारंभे अग्निं दूतमित्युपक्रमात् विनयका
दिपंचकस्योक्तत्वाच्च ॥ तैतिरीयाणां तु ग्रहहोमारंभे
सत्यनेति सूर्यमन्त्रउक्तः ॥ चंद्रस्यअप्यायस्वेति ॥
अधिदेवतानांहोमारंभे अग्निं दूतमित्युपक्रमः ॥ तथाप्र
त्यधिदेवतानां होमारंभेएषामीशेत्युपक्रमः ॥ विनायका
दिचतुष्टयंतुदानदिनकरद्योतेउक्तं ॥ अतस्तदुक्तं स
र्वदक्षिणद्वारसंबंध्यनुष्ठानं माध्यंदिनानामेवेतद्ग्रंथता
त्पर्यं ॥ पूर्तेदिनकरद्योतेतुसर्वदक्षिणद्वारानुष्ठानंजापका
नुष्ठानव्यतिरिक्तं सर्वकातीयानामेव तद्ग्रंथकारेणो
पदर्शितम् ॥ जापकौतुतैतिरीय शाखिनोकार्यौ ॥ प्र
कृतग्रंथोक्तजापकसूक्तानां तैतिरीयशाखायां विद्य
मानत्वात् ॥ रामेश्वर भट्टविरचितशौनकोक्तविधाने
नाश्वत्योद्यापनेदक्षिण द्वारेहोमकर्तारौ तैतिरीयशाखि

नोंकार्यो ॥ एतद्ग्रंथोक्तप्रधान होममन्त्राणांतैत्तिरीय शाखायांसत्वात्॥दक्षिणद्वारकारिकाप्यत्रैखो ॥ तथाहि दक्षिणेद्वारपालौतु रुद्रगानपुरुषसूक्तकं ॥ श्लोकाध्यायं शुक्रियंच मंडलाध्यायमेवच ॥ यद्यप्यस्यार्थोनोक्तस्त थापि मयूखादिपर्यालोचनयो एतत्कारिकोक्तद्वारपाल सूक्तानांमाध्यंदिनशाखायां सत्वात् ॥ तच्छाखिनोद्वा रपालौकर्तव्यौ नान्यशाखिना वितिग्रंथकर्तुरभिप्रा योभाति ॥ दानमयूखेदक्षिणद्वारसंबंधि द्वारपालसू क्तानिमाध्यंदिनानामुक्तानि जापकसूक्तानि तुरौ द्रसूक्तभिन्नानिसकलानि माध्यंदिनानां प्रधानहोम मंत्राइत्याद्युक्त्वाआकृष्णेनेत्यारंभः कृतः ॥ तथाप्रत्य धिदेवता नामग्निंदूतमित्यारंभः ॥ विनायकादिपंचकं चोक्तम् ॥ तत्र गणानांत्वा मम इति चोक्तम् ॥ त था अधिदेवतानांपट्पष्ठिमन्त्रात्मनोरुद्राध्यायस्यपरमे ष्ठिऋषिरित्याद्युक्तम्॥ तथानमस्तेदध्म इतिचोक्तम्॥ दध्म इत्यंताः षोडशैवरुद्रसूक्तमिति नारायणीयेप्रमा णंचोक्तम् ॥ नमस्तेत्यादिःदध्मइत्यंतोरुद्राध्याय इत्यं तं पूर्वोक्तम् सर्वमाध्यंदिनानामेवास्ति ॥ तैत्तिरीयाणां तु दानयोतेग्रहहोमारंभेउरसत्येनेत्याद्यारंभः तथापि

देवतानांअग्निं दूतमित्यारंभः॥ तथा प्रत्यधिदेवता नांहो मारंभेएषामीशइत्युपक्रमः विनायकादिचतुष्टयंवर्तते ॥ गणानांत्वानम इतितैतिरीयाणमस्ति ॥ तथामहारुद्र पद्धतौ तु नमकानां प्रथमानुवाकेआद्यायाःकश्यपइति चोक्तम् ॥ नमस्ते इत्यादिः दधामिइत्यंतोरुद्राध्या यो वर्तते ॥ अतो दानमयूखेसर्वं मनुष्ठानंमाध्यंदिना मेवोक्तं नान्येषां ॥ उत्सर्गमयूखेदक्षिणद्वारपाल सूक्ता निउक्तानि॥ तन्मध्येआदित्योवा एतन्मन्डलमितिमाध्यं दिनानां नास्तिवर्तते तु ऋचंवाचमितिअ तोमाध्यंदिनतै त्तिरीयावुभावपिं द्वारपालौकार्यौ ॥ जापकौतुतैत्तिरीया यावेव एतद् ग्रंथोक्तजापकसूक्तानां तच्छाखायांसत्वा त् ॥ होमकारौ तु माध्यंदिनावेवद्वादशानां प्रधानहोम मन्त्राणाम् वरुणदेवताकानाम् माध्यंदिनीय शाखायां सत्वात् ॥ तैत्तिरीयाणाम् तु प्रधानमन्त्रेषु एतेशतमि तिवनेव्यन् तस्मिमिति द्वयोर्मन्त्रयोरभावात् होमेतै त्तिरीयैनकार्यौएव मेतद्ग्रन्थस्य तात्पर्यम् ॥ प्रतिष्ठा मयूखेदक्षिणद्वारपालौ माध्यन्दिनावेव एतद्ग्रन्थीय द्वारपालसूक्तानांमाध्यन्दिनीये शाखायां विद्यमानत्वात् तैत्तिरीयाणांतु एतद् ग्रंथोक्तसूक्तेषु आनोभद्रा नुवाकः

तथायद्देवादेहेडनमिमितितिस्त्रः कौशांडयः आकृष्णेन ऋ
चंघाचमित्यन्तानिचसंति अतोतैतिरीयौ द्वारपालौ न का
र्यौ एतद्ग्रंथाशयः ॥ रुद्रकल्पद्रुमेद्वारपालौमाध्यंदिना
वेव एयद्ग्रंथोक्त द्वारपालसूक्तानां माध्यंदिनानामे
वसत्वात् ॥ कण्वशाखां विहायमाध्यंदिनशाखेवकुत इति
चेत् माध्यंदिनशाखेति विशिष्ट वचनस्य प्रकृत ग्रंथ
संमतत्वात् ॥ स्मृतिदानतरंगेजपेयुः शांतिकाध्यायं जा
पकाः सर्वतोदिशं ॥ पठ्यध्वमिति तान्ब्रूयादाचार्यस्त्व
भिपूजयेत् ॥ यजध्वमिति च ब्रूयाद्धोतृकान्पुनरेव
तु ॥ उत्कृष्ठमन्त्रजप्येनतिष्ठध्वमिति जापकान् ॥
इति तटागोत्सर्गे लिंगदर्शनात् ॥ शांतिकाध्यायं
शंन्नइंद्राग्नीइत्यादिसूक्तम् ॥ सूक्तानां अध्यायोक्तिः
अधीयतइत्याध्यायः इतियोगः ॥ यद्वाअध्यायपदम् ऋचं
वाचमिति माध्यंदिनशाखाध्यायाभिप्रायेणाप्यत्रोपचा
रात् एवं लिखितं ॥ अतोमाध्यंदिनशाखा ध्यायिनै।
द्वारपालौ कर्तव्यौ ऋचंवाचमित्याध्यायस्य माध्यंन्दिन
शाखाध्यायिनौ द्वारपालौकर्तव्यौ ऋचंवाचमित्याध्याय
स्य माध्यंदिनशाखायामेव सत्वात्एव मेतद्ग्रंथाशयः॥
मदनरत्नेदानखंडे ॥ दक्षिणे तु द्वारपालौरुद्रान्पुरुष

सूक्तकं ॥ इलोकाध्यायं शुक्रियंचमंडलाध्यायमेवच ॥ रुद्रान्नमस्ते इत्याध्यायः ॥ सहस्रशीर्षेत्यादिषोडश चैपुरुषसूक्तम् ॥ इलोकाध्यायं देवसवितेति त्रिंशतमा ध्यायं ॥ शुक्रियंऋचंवाचमिति षट्त्रिंशाध्यायंमंडला. ध्यायंयदेन्मडल मित्यादिब्राह्मणम् ॥ एतानिजप्यानि सूक्तानिमाध्यंदिना नामेवप्रसिद्धानि अतस्तावेवद्वार पालौकार्यौ इति एतद्ग्रंथाशयः ॥ रेणुकाकारिकायां ॥ बहूनांयाजुषाणाम् च कथम् कुर्वंतिशाकलाः ॥ दक्षिणे तुद्वारपालौरूढ्यावाजसनेयकौ ॥ एवं रामवाजपेयेपि॥ यजुषोनेकशाखात्वात्संदेहेसनुपस्थिते ॥ दक्षिणेद्वारपा लौ तु रूढ्यावाजसनेयकौ ॥ इतिरूढि पदघटित ग्रं थद्वयघटक वाजसनेयोपदं माध्यंदिनशाखाविशिष्टे एवं रूढं ॥ यद्यपिकण्वशाखा विशिष्टेयोगसत्वेपि क ण्वा इतिव्यवहारेणरूढ्यभावात् ॥ तैत्तिरीयशाखावि शिष्टे तु उभया भावात् ॥ योगापहरिण्यारूढेर्बलीय स्त्वात् ॥ प्रकृतशाखाविशिष्टशिष्टाचेचऋत्विजांचितिप्र कृतग्रंथद्वयाशयः॥न केवलमेतावदेवान्य दपिवदामः॥ भूपालयद्वृत्तावपि माध्यन्दिनी तु याशाखासर्वसाधा रणीहिसा ॥ शाखासुकासुसर्वासु ऋत्विक्माध्यन्दिनस्मृ

तः ॥ अत्र ऋत्विक्माध्यंदिन इति कंठखोत्तयापूर्वोक्तं स्थूणानिखाननन्याय वट्टीवभूव ॥ अथैषांग्रन्थानाम् मुख्याशयः संक्षेपेणप्रदर्श्यते ॥ प्रतिष्ठावासुदेव्यांमाध्यंदिनतैतिरीयैर्होद्वारपालौ कार्यौइत्युक्तम् ॥ १ ॥ प्रतिष्ठाहेमाद्रावपिमाध्यन्दिन तैत्तिरीयावेव विधेयाविच्युच्यते २ मदनरत्नाकरेजापकसूक्त प्रतिपादकमात्रवचनम् लिखितम् तदाशयस्तुतैत्तिरीयावेव जापकाविति ॥ ३ ॥ दानदिनकरद्योते दक्षिणद्वारीयमनुष्ठानम् सर्वमुतैत्तिरीयाणामेवोक्तम् ॥ ४ ॥ पूर्तेकमलाकरेदक्षिणद्वारपालसूक्तानि माध्यन्दिनानामेवोक्तानि ॥ ५ ॥ दानकमलाकरेदक्षिणद्वारीयंसर्वमनुष्ठानम् माध्यन्दिनैरेवकार्यमित्युक्तम् ॥६॥ पूर्तदिनकरद्योतेजापकानुष्ठानातिरिक्तम् सर्वमनुष्ठानम् माध्यन्दिनानामेव लिखितम् ॥ ७ ॥ रामेश्वरभट्टविरचित शौनकोक्तविधाने • नाश्वत्थोद्यापनेद्वारपालत्वम् माध्यन्दिनानामेवेति तात्पर्यम् ॥ ८ ॥ दानमयूखेपि सर्वमनुष्ठानं माध्यन्दिनानामेव ॥ ९ ॥ तथैवउत्सर्गे मयूखेसर्वमाध्यन्दिनानामेवोक्तम् ॥ १० ॥ प्रतिष्ठामयूखे द्वारपालसूक्तानि माध्यन्दिनीयान्येव ॥ ११ ॥ रुद्रकल्पद्रुमेद्वारपालसू

क्तानि माध्यन्दिनानामेवोक्तानि ॥ १२ ॥ स्मृतिसिं
धुदानतरंगे द्वारपालौमाध्यन्दिनावेबे त्यनुवर्तते ॥ १३॥
मदनरत्ने द्वारपालसूक्तानि माध्यन्दिनानामेवोक्तानि
१४॥ रेणुकाकारिकायांसर्वमनुष्ठानम् माध्यन्दिनानामे
वोक्तम् ॥१५॥ रामवाजपेयीयेपितथैवोक्तम् ॥ १६ ॥
भूपालपद्धतौ तु विशिष्य माध्यन्दिनामेव स्थिरीकृत
म् ॥ १७ ॥ तथाऽप्यत्रेदम् तत्त्वमवधेयम् ॥ प्रतिष्ठा
वासुदेव्याम् १ प्रतिष्ठाहेमाद्रौ २ दानरत्ना करे ३
दक्षिणद्वारीयमनुष्ठानम् माध्यन्दिनतैतिरीणाम् सहैव
लिखितम् ॥ दानदिनकरद्योते केवलतैतिरीणामेवलि
खितस्या नुष्ठानस्य दानकमलाकरप्रतिष्ठा हेमाद्रिप्र
मुखबहुग्रन्थ विरोधादुपेक्षतेसिद्धे पिस्वकृतदिनेकरद्योत
विरोधो माध्यन्दिनानामेव मुख्याधिकारानुकूलत्वं द्योत
यति ॥ न केवलमेतावदेव किंत्वन्यनिबंधग्रामानुग्राह
कत्वमपि वरिवर्तितराम् ॥ तथाहि पूर्तकमलाकरे १
दानकमलाकरे २ पूर्तदिनकरद्योते ३ रामेश्वरभट्ट वि
रचिताश्वत्थोद्यापने ४ दानमयूखे ५ उत्सर्गमयूखे ६
प्रतिष्ठामयूखे ७ रुद्रकल्पद्रुमे ८ स्मृतिसिंधुदानत
रंगे ९ मदनरत्ने १० रेणुकाकारिकायाम् ११ राम

वाजपेये १२ भूपालपद्धतौ १३ एतेषु त्रयोदशग्रन्थेषु केवल माध्यन्दिनानामेवानुष्ठानम् निर्णीतम् ॥ एतावतापूर्व ग्रन्थ त्रयेयद्यपि तैत्तिरीयाणामेव दक्षिणद्वारीयमनुष्ठानंलिखितम् तथापिमाध्यन्दिनैः सहैव ॥ निरुक्तत्रयोदशग्रन्थेषु तु केवलंमाध्यन्दिनानामेवाधिकारः स्थितः ॥ पुनरन्यत्रापि ॥ दानखंडे १ दानकांडे २ नारायणभट्ट कृतारमोत्सर्गपद्धतौ ३ प्रतिष्ठाकौस्तुभे ४ दानद्योते ५ देवयाज्ञिककृतहोमात्मकमहारुद्रपद्धतौ ६ विधानपारिजाते ७ रुद्रकल्पद्रुमे ८ एतेष्वष्टग्रन्थेष्वपि विस्पष्टं प्रकृतशाखाविशिष्ठशिष्टानामेव दक्षिणद्वारनुष्ठानाधिकारो मुख्यत्वेन निर्णीतः॥ एवंगवेषणायामारब्धायां इदमंशे पुनरपिबहुलं ग्रन्थजालंप्रकृतानुकूलं विलसति परंतुग्रन्थविस्तृतिभीत्याविशिष्यनाविशिष्यते॥एवं चोक्तानेकग्रन्थसंमत्यामाध्यन्दिनशाखाविशिष्टानांमेव यज्ञमंडपदक्षिणद्वारीय कर्मानुष्ठानाधिकारो मुख्यइतिसिद्धम् ॥ अत्रेदंविचार्यते ॥ न च क्वचिद्ग्रन्थेषुतैत्तिरीय सूक्तानांजपस्योक्तत्वान्माध्यन्दिनानां होतृत्वेपि तेषाजापकत्वमेव शंकनीयम् ॥ कृत्वेत्यत्रक्त्वाप्रत्ययस्य समानकर्तृत्वे एव संभवा

तू ॥ होमकर्तृभिरेवजपः कार्यइति तैरेवव्याख्यातत्वा च्च ॥ न च तैत्तिरीयसूक्तानिमाध्यंदिनैः कथं जप्या नीतिविवदितव्यम् ॥ तान्यपि यद्यवश्यकतयापठनीया निचेत्तर्हि बह्वृचानां श्रीसूक्तादिपठनेमिव माध्यन्दिना नामेवतत्सूक्तपाठे बाधिका भावात् न हि शुक्लयजु षाणामभावेतैत्तिरीयैरेवकेवलं सर्वमनुष्ठानमु कार्यमिद मम् शैकिंचित्प्रमाणमुपगम्यते ॥ किं च निरुक्तग्रन्थ कृतायदि तैत्तिरीयस्थितिरेवाभिमताचेत्तर्पामेवमधुपर्क वर्णनादिषूयुः नचतैः कुत्रचिदपि तदुक्तम् । तस्मात्त त्सूक्तपठणस्याकथनेपि प्रोक्तरीत्यासर्वानुष्ठान व्यव स्थितिः प्रकृतशाखा विशिष्टशिष्टानामेवेति सिद्धम् ॥ एतेनोत्सर्गादिविषये मयूखकारादिभिः पठितानांतैत्ति रीय सूक्तानां स्वानुकूलंवदंतोविव दंतोपितैत्तिरीयाः परास्तः ॥ तथाचगौणमुख्ययो मुख्येकार्यसंप्रत्ययइ तिन्यायात् गौणमुख्ययो सतिमुख्ये गौणस्य मुख्य वत्कार्यसंपदकत्वा भावा मुख्यानाम् माध्यन्दिनानामेव यज्ञादिकुन्डमन्डप दक्षिणद्वारीयसर्वकर्माधि कारोऽने कग्रन्थीयप्रमाण गण भूषणतया सर्वसंमतइतिसिद्धं ॥ ननु चरणव्यूहभाष्येअस्मिन् भरतखंडे नर्मदामध्यरे

यां परिकल्प्यप्राच्यामुदीच्यांनैऋत्यां च दिशायांशुक्ल
वाजसनेयपंचादशशाखोत्पत्ति मुक्त्वापुरतोदेशपरत्वेन
दक्षिणद्वारा दैवेदशाखाविभागउक्तः ॥ तच्च महा
र्णवे ॥ पृथिव्यामध्यरेखा तु नर्मदापरिकीर्तिता ॥ द
क्षिणोत्तरयोर्भागेशाखाभेदः प्रदर्श्यते ॥ १ नर्मदाद
क्षिणेभागे अपस्तम्बाश्व लायनि ॥ नाराणायनोपि
प्पलाच यज्ञकन्याविभागिनः ॥ २ ॥ माध्यन्दिनीशा
खायनी कौथुमीशौनकीतथा नर्मदोत्तरभागे च यज्ञक
न्याविभागिनः ॥ तुंगाकृष्णातथागोदा सह्याद्रिशिख
राविधि ॥ आंध्रादिदेशपर्यंतम् बव्हृचंश्चाश्वलायनी ॥
उत्तरेगुर्जरेदेशेदोबव्हृचं संज्ञकः ॥ कौशीतकीब्राह्मणंच
शाखाशाख्यायनीस्थिता ॥ आंध्रादिदक्षिणाग्नेयी गंगा
सागरसंगमात् ॥ यजुर्वेदस्तैतिरीयो अपः स्तंबीप्रति
ष्ठिता ॥ सह्याद्रि पर्वतारंभान्नैऋत्यां दिशिसा गरात्॥
हिरण्यकेशिशाखच परशुरामस्यसन्निधौ॥ मयूरपर्वता
च्चैव यावद्गुर्जदेशतः ॥ व्यात्यावायव्य देशात्तु मैत्रा
यणप्रतिष्ठिता ॥ इत्यादिप्रतिबंधेनयजुषां दक्षिणद्वारादौनि
बंधःकृतः ॥ एत मेव निबंधमनुरुध्यवयमेवसर्वेद
क्षिणद्वाराधिकारिणः नान्येइत्याद्यभिमन्यंते ॥ परंचन

न्नपर्यालोचयंतितत्रैवयदुक्तम् पुरतस्तद्यथा ॥ वाज सनेयशाखा च माध्यन्दिनप्रतिष्ठिता ॥ ऋषिणायाज्ञ वल्क्येन सर्वदेशेषु श्रुता ॥ इत्यादिवचोभिर्माध्यन्दिनी य शाखायाः सर्वदेशव्यापकतया सर्वपूज्यत्वमभिहितं ॥ तथाबृहन्नारदीयेव शिष्टोपि ॥ माध्यन्दिनी तु शाखा सर्वसाधरणीमता ॥ तामेवतुपुरस्कृत्य वषिष्ठेन प्रभा षितम् ॥ अत्र सर्वसाधारणी तारतम्यरहितामुख्येति यावत् ॥ अनेनापिवचनेन सर्वदेशसाधारणतया मुख्य त्वमुसम्यक्सम्पादितम् ॥ ननु प्रकृतशाखायाः एवसर्व त्रमुख्यत्वे पूर्वोक्त देशभेदेन शाखाभेदापादकोग्रंथोनि रर्थकः स्यादितिचेन्न ॥ मुख्यामुख्ययोर्मध्ये असति मुख्येपरस्वीकारो युक्तः इतिन्यायात् ॥ असत्यामेव प्र कृतशाखायां यथोक्तशाखानां यथादेशं यथायोग्यतया मुख्यत्वमिति ग्रंथसार्थकतासमर्थनीया ॥ अन्यथोक्त रीत्यामुख्यत्वामुख्यत्व प्रतिपादकानामनेकग्रंथानांनिर र्थकतयास्यात् ॥ न ह्येकेन द्वाभ्यांवाबहूनां ग्रंथानाम् नैरर्थक्यं समर्थयितुमर्हं ॥ कितनेकैरेकस्यैव ॥ तथा च निरुक्तरीत्या सार्थकतासमर्थनमेवागतिगतिक तयासमंजसमित्यवसेयं ॥ अत एव जैमिनिमुनिवर्यै

णतृतीयाध्यायस्य द्वितीयपादे प्रथमाधिकरणे सिद्धान्तितम् ॥ शब्दोहि मुख्यार्थमभिधाय गौणमर्थमभिधातुं नशक्नोतीति ॥ मुख्यार्थस्य नांतरीयकतयातेनैव प्रयोजनत्वादिति। ।एवं च सर्वासुशाखासुमाध्यन्दिनशाखायाएवोत्तमत्वेन मुख्यतया प्रकृतशाखाविशिष्ट शिष्टसमवधाने प्रथमतोमाध्यन्दिनानामेव मंत्रपाठादिकम् युक्ततममितिसिद्धम् ॥ ननु माध्यन्दिनशाखा विशिष्टशिष्टानामुत्तमत्वबोधकानाम् निरुक्तश्रुत्यादि प्रमाणानाम् अर्थवादत्वेन वायुर्वैक्षेपिष्टादेवतेत्याद्यर्थवादवाक्यवत्स्वार्थविषय कतात्पर्यशून्यत्वमिति चेन्न ॥ स्वार्थविषयकतात्पर्य वतांनिरुक्त श्रुत्यादिप्रमाणानाम् न हि सर्वथाअर्थवादत्वहक्तुं शक्यम् ॥ अभिमानिकतयैवउच्यतेचेत् ॥ तत्रेत्यं समाधीयते । त्रिविधेष्वर्थवादे अनुवादगुणवादरूपतयोः अग्नि हिंमस्यभेषजं ॥ आदित्योयूप इत्याकारकयोरर्थवादवाक्ययोः क्रमेण ज्ञातार्थज्ञापकतया ,बाधितार्थकत्वेनप्रतिपाद्यार्थविषयकतात्पर्य शून्यत्वे पि भूता र्थवादरुपोत्तमोत्तमत्वबोधक निरुक्तश्रुत्यादि वचसाम् आज्ञातज्ञापकत्वेन स्वार्थतात्पर्यवत्वे बाधकाभावात् ॥ नह्यत्रज्ञातार्थज्ञापकत्वे

नबाधितार्थकत्वं स्वार्थतात्पर्यशून्यत्वे साधकम् वर्त
ते ॥येनस्वप्रतिपाद्येसर्वोत्तमत्वरूपार्थेप्रोक्तश्रुत्यादिव
चसां तात्पर्यंस्यात् ॥ अन्यथावज्र हस्तःपुरंदर इत्यादि
मंत्राणांहरिनामादिसर्वेषत्व जनक वचनानां चक्रमेणवि
ग्रहवत्वे सर्वफलजनकत्वे च तात्पर्यशून्यत्वापत्तेरित्यव
धेयं ॥ इदंचोत्तरमीमांसायांप्रथमाध्यायस्य तृतीयपादेदेव
ताधिकरणेशारीकभाष्यादावनुसंधेयम् ॥ एवं चैतावता
श्रुत्याद्यनेकप्रमाणगवताप्रबंधेनप्रकृतशाखावतशुक्ल
यजुर्वेदगतमुख्यत्वस्य चेदस्यपूर्वकर्मकांडेप्रदिपादनम
कारिइपः परंतुस्थूणानिखनन न्यायेनगायत्र्याद्युपास
नाकांडेपि तस्यैवमुख्यत्वं निश्चिनुमः॥ अथात्रप्रथमंग
र्भाधानादिआत्मज्ञानां तेष्वखिलसंस्कारेषु उपनयनाः
ख्यसंस्कार एवद्विजत्वापादकः ॥ यस्मिन्नुसाक्षात्सावि
त्र्युपदेशेन संस्कृतः श्रौतस्मार्त कर्माधिकारिभव
ति ॥ इदमेवसंस्कार्यस्य द्वितीयं जन्मेतिव्यपदि
शंति ॥ यदाहमनुः ॥ मातुरग्रेविजननं द्वितीयंमौंजि
बंधने ॥इत्याद्यारभ्यतत्रयद्ब्रह्म जन्मास्यमौंजीबंधन
चिन्हितम् ॥ तत्रास्यमातासावित्री पितात्वाचार्यउच्य
ते ॥ इत्थंतेनतृतीयप्रमाणाम्श्रीयनिबंधेनाभिहितपे.

वैमेव ॥ तत्रसावित्रीशब्देन साक्षात्परदेवतेत्युच्य
ते ॥ यदुक्तम्भारद्वाजीये ॥ सावित्रीसर्वजगत्प्रसवि
त्री सैवगायत्री इत्युच्यते ॥ गायंतंत्रायतेत्यादि वचन
तोऽपि गायंतं जपकर्तारंत्रायतत इतिसैव्यत्वेन शब्द
ब्रह्मइत्युच्यते ॥ उक्तं च नारायणोपनिषदि ॥ गाय
त्रीछन्दसाम्मातरित्यादि ॥ इदम्ब्रह्मजुषस्वेति च ॥
तथाभगवद्गीतायाम् ॥ गायत्रीछन्दसामहमिति ॥
संग्रहान्तरेपि ॥ गायत्रीपरदेवतेति विदिताब्रह्मैवचि
द्रूपिणि ॥ पाराशरस्मृतौ तु गायत्रीजपकृद्भक्त्या सर्व
पापैः प्रमुच्यतेति॥ तज्जपफलमुक्तम् ॥ भविष्येपिसर्व
पापानि नश्यन्तिगायत्रींजपतोनृपेति ॥ अग्नेयेपिऐहि
कामुष्मिकम् सर्वंगायत्रीजपतोभवेदिति॥ पाद्मे तु ब्रह्म
हत्यादिपापानि गुरुणिच लघूनिच ॥ नाशयत्यचिरेणै
व गायत्रीज्ञावकोद्विजः ॥ इत्यादिवचनैस्त्रिपदैवोपा
स्येत्युच्यते ॥ ननुगायत्री कल्पकारैर्विश्वामित्रवसिष्ठा
दिभिः तुरीयपादघटित तन्मन्त्रजपस्यैवमुख्यतया च
तुःपदैवोपास्या इत्यच्यते नत्रिपदेतिचेन्न ॥ तस्यवेद
विरोधित्वात् ॥ वेदोदितत्रिपदायाएव उक्तसंस्कारेउ
पदेशानुभावाच्च ॥ त्रिपदैवोपास्येति वैदिकः सिद्धां

तः ॥ अत एवोक्तम् शारदातिलके ॥ अथोवदामि गायत्रीं तत्वरुपाम् त्रयांमयीम् ॥ यथाप्रकाशतेब्रह्मस च्चिदानन्दविग्रहम्॥ प्रणवव्याहृतिव्यश्राहृतयः सप्तस्युस्त त्पदादिकम् ॥ चतुर्विंशत्यक्षरात्मा गायत्रीसिरसा न्विता ॥ सर्ववेदोधृतः सारोमन्त्रोयम् समुदाहृतः ॥ इत्यादि ॥ एवम् च सर्ववेदोदध्युधृतसारभूतात्रिपदे यम् गायत्रीप्रकृत माध्यन्दिनशाखारूपा इत्युच्यते ॥ कथमिति चेत्समवधार्यताम् ॥ योगीश्वरयाज्ञवल्क्य मुनिवर्यैरेवस्वीयशिक्षाया मभिहितम् ॥ तथाहि ॥ अथशिक्षाम् प्रवक्ष्यामि याज्ञवल्क्यः परिस्फुटम् ॥ य जुर्वेदस्यमंत्राणां सम्यक्पाठस्यसिद्धये ॥ १ ॥ प्रण वंप्राकूयुंजीतव्याहृतितृतयन्ततः ॥ सावित्रींचानुपूर्वेण ततो वेदानुसमारभेदित्यादि ॥ एतदर्थस्तु प्रणवस्त्रि गुणः व्याहृतयस्तिस्रः सावित्रपवित्रिपदैवेति ॥ एवं माध्यन्दिनशाखापि त्रिगुणैवेत्यभेदः ॥ ननु कथम्माध्य न्दिनशाखा कथम् त्रिगुणेति चेदुच्यते ॥ प्रकृतशाखा सूत्रकारैः कात्यायनैरेवोक्तम् ॥ मन्त्रब्राह्मणयोर्वेद स्त्रिगुणंयत्रपठ्यते इत्यादि ॥ प्रकृ शाखायाम् त्रिगुण त्वन्तु ॥ विधिर्विधेयस्तर्कश्चेति ॥ अस्यार्थः॥ विधिर्विधा

थकं वाक्यम् ॥ विधेमोमन्त्रः ॥ तर्कः अर्थवादः ॥ तथा च शतपथब्राह्मणे सोसावाज्यमधिश्रयतीति विधिः ॥ इषेत्वेतिविधेयोमन्त्रः ॥ यज्ञोइति अर्थवादः एतत्त्रितयं माध्यन्दिनशाखायामेव ॥ इदमेवोक्तमभियुक्तैः॥ ओं० कारस्त्रिगुणः प्रोक्तः खंब्रह्मत्रिगुणंस्मृतम् ॥ माध्यन्दिनशाखायाम् यजुर्वेदेपठंतिहि ॥ इतिपाराशर ब्रह्मोपदेशः ॥ अन्यच्च ॥ माध्यन्दिनयजुर्वेदः खंब्रह्मां तउदाहृतः ॥ तारपूर्वहित्रिगुणं नान्यशाखासुमुख्यतेति गृह्यमालाकाराः ॥ अपरमपि ॥ ऋषिछंदोदेवतरूपंत्रिगुणम् यत्रपठ्यते ॥ मंत्रब्राह्मणात्मके वेदेसयजुर्वेदो मुख्य इति ॥ निरुक्तपाराशर ब्रह्मोपदेशीयखंब्रह्म त्रिगुण मित्यम् शस्यकथम् त्रिगुणत्वमिति चेदुच्यते ॥ खंब्रह्मे त्यत्रखोपलक्षितमेव ब्रह्मेत्यर्थः ॥ तथा च ब्रह्मणस्त्रिधाप्रतीतिः ॥ विशेषणविधयाउपाधिविधयाउपलक्षण विधयेति ॥ यथाअंतः करणावच्छिन्नंचैतन्यम्तदुपहितम् तदुपलक्षितम् चेति ॥ अत एव शारीरकप्रथमाध्यायस्य द्वितीयपादेकम् ब्रह्म खं ब्रह्मे त्यत्रखोपलक्षितमेव ब्रह्मेति भाष्यकारैरपि भाषितम् ॥ अत्रोपलक्षणत्वन्तु अवर्तमानत्वेसंति कार्योन

न्वयित्वे सति इतरव्यावर्तकत्वम् तयाचेतोदशत्रिगुण त्वम् माध्यन्दिनशाखामूर्धन्य खंब्रह्मशब्देसम्यकूवरी धर्तिं इत्यवधेयम् ॥ एवम् च गायत्रीमारभ्य खंब्रह्मां तेयं माध्यन्दिनशाखा गायत्र्यभिन्नैवेतिद्धम् ॥ अत एवादिमध्यावसानेषु प्रणववत् गायत्र्याः आवृत्तिर पि प्रकृतशाखायामेवानुभूयते ॥ ननुऋषिछंदोदेवतरू पेणात्रिगुणत्वम् कथमिति चेदुच्यते ॥ कात्यायनाचा र्यैः सर्वानुक्रमसूत्राणामादिमंप्रति ज्ञासूत्रमुक्तम् त द्यथा ॥ मन्डलंदक्षिणमक्षिहृदयंचाधिष्ठितंयेन शुक्ला नियजूंषिभगवान् याज्ञवल्क्योयतः प्रापतम् विवस्वं तम् त्रयेमयमर्चिष्मन्तमभिध्यायमाध्यन्दिनीये वाज सनेयके यजुर्वेदाम्नाये सर्वेसखिलेसशुक्रियेऋषिदेव तछंदांस्यनुक्रमिष्यामः इति ॥ एतदर्थस्तुभाष्यानुरो धेनातिसंक्षिप्यैवोच्यते ॥ पूर्वं तत्रेत्थमन्वयः ॥ व यंयजुर्वेदाम्नाये ऋषिदैवतछंदांस्यनुक्रमिष्यामः ॥ व क्ष्यामइत्यर्थः ॥ तत्र यजुर्वेदस्य बहुशांतिभेदात्मकत्वात् कस्मिन्-यजुर्वेनाम्नाये इतितंविशेषयति ॥ वाजसनेय केति ॥ तस्यापिपंचदशशाखात्मकत्वात् कस्मिन्नतः पु नर्विशेषयति ॥ माध्यन्दिनीयेति ॥ वाजसनेयावांतरभे

देमाध्यन्दिनीयसंज्ञके यजुर्वेदाम्नाये पुनः कीदृशेसर्वे सहृकृग्भिर्वर्तमाने ॥ पुनः सखिले अत्र खिलशब्देना नारभ्याधीताः क्वचित्कर्मण्यविनियुक्ताः मंत्रगणाः उ च्यन्ते ॥ तत्सहितेत्यर्थः॥ तथासशुक्रियेशुक्रोदित्यः॥ ए ष एव शुक्रोयएपस्तपतीतिश्रुतेः ॥ अतः शुक्रस्यादि त्यस्यसंबधीयोमंत्राभागः ऋचंत्वात्वमित्याकारकः तत्स हिते इत्यर्थः ॥ किंकृत्वातंविवस्वंतं सूर्यंत्रयीमयंवेदत्र यात्मकं सेपात्रैय्येवविद्यात्तपतीतिश्रुतेः ॥ अर्चिष्मंतं दीप्तिमंतं अभिध्याय अत्यादरेण ध्यात्वामंत्रदृष्टारोऋ षयः तत्प्रतिपाद्याः देवताः गायत्र्यादीनिछंदांसिअनु क्रमेण वदिष्यामः ॥इतियथाश्रुतः सौत्रोऽर्थः॥ तथा च ऋषिदेवताछंदोरूपेणापि त्रिगुलम् संपन्तम् ॥ किंचयो सावादित्येपुरुषः सोसावहमित्यांतिममन्त्रेण गायत्र्य धिदेवताभेदापादकेनापि विस्पष्टंअस्याः गायत्रीरूप त्वम् ॥ एवं च गायत्रीमुपक्रम्यसो सावहमित्युपसंहारेण प्रकृतशाखाया एव निर्विचिकित्संगायत्रीरूपतया स्वंत्र ह्मे तिमूर्धन्येनापि ब्रह्मरूपत्वमस्या मेवातिजागरूकत या त्रीरवर्तितराम् अथप्राणायामगायत्रीजपादौ अर्थ विभावनापूर्वकएव सावित्र्याः जपोभिहितः ॥ अत

स्तदर्थस्तुतद्भाष्यादावेवानुसधेयः ॥ तथाचयथोक्तसं स्कारसंस्कृतान् आचार्योपनीतान् अभिवादनादिक्रियापटुनपिबटून् सर्वशाखीयाः निजपूर्वजपारम् पर्यागत स्वशाखीयस्वरपाठादिक्रमेण इमामेव माध्यन्दिनगायत्री मुपदिशन्ति ॥ ननुसर्वेप्याश्वलायनादयो आचार्याः स्वस्वाध्यायाध्ययनाधिकारसंपत्तये स्वस्व शाखीयामेव गायत्रीमुपदिशन्तीति कथम्माध्यन्दिन शाखीयामेव उपदिशन्ति इत्युच्यते इतिचेन्न ॥ स्व शाखाध्ययनाधिकारसंपत्तये स्वशाखीयगायत्र्युपदेश एवयुक्तः ॥ परंचस्वशाखायाम् गायत्रीपूर्वकपाठाभावे तु अगतिगतिकतयायस्यांशाखायां गायत्रीपूर्वकत्वम् तच्छाखीएव गायत्रीउपदेशोयोग्यः ॥ न ह्याश्वलायनशाखायां गायत्रीपूर्वकः पाठप्रसिद्धः ॥ किं तु अग्निमीळे इत्यादितएव तस्यगायत्रिलाभावात् ॥ तदनुपदेशाच्च ॥ एवम् तैतिरीयशाखायामपि समुद्रो अश्वस्ययोनिरित्यारभ्यसमुद्र इत्यंतायाः गायत्रीपूर्वकत्वाभावोव्यक्तएव॥ तथाकण्वशाखायामपि इषेत्वेत्यारभ्यनमउत्तर्यंतायाः गायत्रीपूर्वकत्वाभाव.संभवति ॥ एवमेवान्यास्वपि यथायोग्यमवसेय ॥ तस्माद्गायत्री

छन्दसाम्मातरित्यादिवचनतः गायत्र्याः छंदोमातृत्वम पि अस्यांप्रकृतशा यामेवानुभवेनतदुपदेशस्यैव सर्व शास्त्राध्ययन प्रयोजकतयाद्विजत्वापादकतया च त स्या एव मुख्यत्वमितिसिद्धम् ॥ अन्यथाऋग्वेदाध्ययनवतांसर्वेषां माध्यन्दिनीयगायत्र्युपदेशा तथा रुद्राध्यायजपोपि माध्यन्दिनएवेत्युच्यते ॥ कथमितिचे त्स श्रवधार्यताम् ॥ अथरुद्रकल्पद्रुमो तर्गतरुद्रार्चनचन्द्रिकाकारैरुक्तम् ॥ तत्रादौकतृविशेषंप्रतिशाखा विशेषेणरुद्रानुष्ठानंनिर्णीयते इतिप्रतिज्ञायथ्यपिवा जसनेयीशाखा सुश्रुतेपि रुद्रे रुद्रजपादिविधिस्तस्येति कर्तव्यताविविश्च न श्रूयते बौधायनस्तूत्रहेमाधुदा हृतशौनकमतबृहत्पराशरस्मृति कालिकापुराणादौरुद्रे इति कर्तव्यताविधिर्नानाविधोदृश्यते ॥ अतस्तेषांम न्यतमः प्रकारो वैकल्पिकः प्रसक्तः॥ तथापि अथाभि धास्ये रुद्राणाम् शान्तयेत्रहमेधिनाम् ॥ पंचांगानाम् विधानान्तु यत्कृतंहंतिपातकमित्युपक्रम्यसमधीतइषे त्वादिषु मंत्रेषुसंत्रह्मान्तेषु दशत्रणवसंयुक्ताः भूर्भुवः स्वरितिषेति बृहत्पाराशरवाक्येखं ब्रह्मान्ततोपादाना त् इषेत्वादिकानां संत्रह्मान्तानां माध्यन्दिनशाखाया

मेव समधीतत्वात् नान्यशाखासु ॥ अतोवृहत्पराशर स्मृतिविहित इति कर्तव्यताविधिर्माध्यन्दिनशाखाया मेवेत्यवसीयते इत्युक्तम् ॥ किंच बह्वृचादिभिस्तु श्रौतक र्मानुष्ठानार्थं स्वपरंपरापरिग्रहीत यजुःशाखासमधीत रुद्र जपादिकार्य मित्युक्तत्वात् ॥ ननु बह्वृचादीनां रुद्राभावेपि तैतिरीयरुद्रस्तैरनुष्ठेय इति चेन्न ॥ तैत्ति रीयशाखा समधीतरुद्रस्यांगोपांगादीनामश्रवणात् ॥ कृष्णत्वाच्च ॥ अतः सांगोपांगः शुक्लयजुर्वेदीय रुद्र जपएवतेषामनुष्ठानेऽतिप्रशस्त ॥ यद्यभितिक्ततया तैतिरीयएव तैरनुष्ठीयते चेत् यथोक्त सांगोपांगरुद्र जपफलं नस्यादित्यवधेयम्॥ तत्ररुद्रसूत्रे वृहत्पाराश रोक्तविधिः॥ अथपचांगरुद्रन्यासाः ओं मनोजूतिरिति हृदिविन्यसेत् ॥ मनोजूतिरिति कण्वानां ॥ अबोध्यग्नि रितिसिरसि ॥ मूर्धा नंदिवइति शिखायाम् ॥ मर्माणि तइतिकवचम् ॥ मानस्तोकइत्यस्त्र इति प्रथमः ॥ या ते रुद्रशिवातनू रघोरेतिचूडायाम् ॥ अस्मिन्महत्य र्णव इति शिरसि ॥ असंख्याताः सहस्राणीति लला टे ॥ त्र्यंबकंयजामह इति द्वयोः नेत्रयोः ॥ मानस्तो क इति नासिकायां ॥ अवततधनुरिति वक्त्रे ॥ नील

ग्रीवा इतिह्वैकंठे ॥ नमस्त आयुधायेति प्रकोष्टयोः॥ येतिर्थानीतिहस्तयोः ॥ नमवः किरिकेभ्य इति हृदये॥ नमोहिरण्यवाहवे इति नाभौ ॥ इमारुद्रायेनिगुह्ये ॥ मानोमहांतमित्यूर्वोः ॥ एषतें रुद्रभाग इति जान्वोः ॥ अवरुद्रमितिजंघयोः ॥ अध्यवोचदिति कवचं । नमोवि ल्पिनेइति उपकवचं ॥ नमोस्तुनीलग्रीवायेति भृष्टितो विभुत्त्यामध्यमयानेत्रम् ॥ प्रमुचधन्वइत्यस्त्रं ॥ पवं तावंतइचेतिदिक्बंधः ॥ इति द्वितीयः ॥ ब्रह्मरंध्रनासि कालललाटास्यहृदय दक्षिणवामकरनाभिपत्सु दशार्णस्य वर्णान् प्रणवाद्यन्तं नमो तान् सानुस्वारानूक्रमान्न्यसे दितितृतीयः ॥ आतारविन्द्रं लं नोअग्ने ॥ तबसुगग्नुपं थामसुन्वं तलायाम्यानोनिपुद्रिवेड् गुसोतमीशान म स्मैरुद्रास्योनापृथ्वीति दशत्रैदेंशदिक्षु प्राच्यादिषु संपु टंकुर्यादेतेमंत्रैरिंद्रादीन्दिक्षु प्रणमेदितितुरीयः ॥ पचं गानि तन्मुद्राभिः ॐवीर्भमिन्त्येसेच्छियसंकल्पहृद्दयमे कैवस्रकण्वानां ॥ पुरुषसूक्तङ्शिर उत्तरनारायण शि खा प्रतिरथंकवचम्मशुः शिशान इति द्वादशमप्रतिरथ मित्याहुस्तस्माद्ब्रह्माप्रतिरथम् जपत्याशुः शिशानो चपमोनभीम इत्यैह्मोभिरुपाद्वादशभवतीति श्रुतेर्वि

आद्दित्यनुवाको नेत्रङ्शतरुद्रीयमत्रङ्रौद्रा ध्यायङ्
शतरुद्रीयमित्याचक्षते॥ पठिश्चहृवैत्रीणि च शतान्ये
तच्छत रुद्रीयमथत्रिङ्शदथपंचत्रिङ् शदिति श्रुतेरि
तिपंचमः ॥ एषते रुद्रभाग इति मुद्रांप्रदर्शयेच्छिव मु
ष्ठि शिवस्येतिवचनच्छिकामश्रीण्णितेजस्कामोनेत्रयो
रन्नाद्यकामोमुखे रोगनाशकामोग्रीवायाङ् सर्वकामो
हृदये ज्ञानीनाभौप्रजाकामो गुह्येपशुकामोजंघयोर्मा
मकामोजान्वोराष्ट्कामः पादयोः॥ वशीकरणकामोह
स्ते पापक्षयाभिचारव्याध्यपगमकामाः बहिः शरीरात्
कुर्वीरन्न्यासमन्त्राः। प्रणवादिकाः पूजामन्त्राङ्वेवंन्य
स्ततनुः साक्षाद्रुद्रोभवति ॥१॥ अथ पाराशरबोधाय
नादिप्रोक्तविधिना जपेच्छिवसंकल्पं पुरुषसूक्तमुत्तरना
रायणंमप्रति रथमूविभ्राडिति पंचागमन्त्रान् जपित्वा
ङ्गमन्त्राङ्त्येके ॥ तिसृणामहाव्याहृतीनाङ्रुद्रस्यचा
द्राविति च तारो तेचैवमित्यष्टौप्रणवाः अष्टप्रणवयुक्त
ङ्रुद्रङ् सकृज्जपेद्रौद्राध्यायङ् रुद्रमित्याचक्षते ॥ नील
सूक्तङ् शांत्याध्यायंचैवआद्योरुद्रः॥ पूर्ववत्पंचांगमन्त्रा
न् जपित्वाप्रणवयुक्त रुद्रमेकादशकृत्वोऽध्यङ् सपंचां
गमन्त्रंवाजपेन्नीलसूक्तङ् शांत्यध्ययंचैपद्वितीयः ॥

षडूगानिजप्त्वा पूर्ववद्रुद्रमेकादशकृत्वा नीलसूक्तं च सकृद्दयंह सोमेत्यष्टचैर्नीलसूक्तमित्याचक्षते ॥ सप्त र्षै कण्वानाह शांत्याध्यायं चैववाद्वितीयः ॥ पंचां गानिजपित्वा पूर्ववद्रुद्रमेकादशकृत्वा जपेदंतरोंतरा वाजश्च मइत्यष्टानुवाकानामेकादशधाकृतानामेकमे- कंजपेदाद्ये पठितेरुद्रे वाजश्चम इति च तस्त्रोद्वितीये सत्यंचेति चतस्रस्तृतीये ऊर्क्चेति च तस्त्रस्तुरीये अ श्माचमेतितिस्त्रः पंचमे अग्निश्चमेत्यूर्द्धे न्द्रसंज्ञाः प्रं चानुवाकाः अंशुश्चेतिग्रहसंज्ञाः षष्ठाःसप्तमे अग्नि श्च मेघर्मश्चमे इति यज्ञक्रतु संज्ञे २ एकाचमेत्युकूर्स्तो मसंज्ञा १ अष्ठमे चतस्त्रश्च मइतियुग्मस्तोमसंज्ञा१ नवमे त्र्यविश्चमे इति वयः संज्ञे २ दशमे वाजायस्वा हेतिनामग्रहकल्प संज्ञे २ एकादशेइयंते इति त्रयोरि भक्ता शांत्याशांत्याध्यायंचैवं द्वितीयः ॥ पंचांगानिज पित्वारौद्राध्यायमेकादश धाकृत्वाशांत्याध्यायमुचैवंद्वि तीयोस्परुद्रइत्याख्येनह सकृदावृत्यब्रह्महत्यादिभिः सर्वै संमहापापैर्मुक्तोभवतीत्याहुरत्रिपराशरशातास पारुद्रमावृत्य रुद्रतांयातीति भगवान्पराशरोयावज्जी वंप्रत्यहंरुद्रंजपेत् सर्वेषुग्रहदोषेषु दुःस्वप्नेषु तदर्शने

शाकिन्यादिग्रहदोषेज्वरादिसर्वरोग शांतिकामः सर्वपा पक्षयकामः श्रीकामः पुष्ठिकामःपुत्रकाम.पशुकामःशिव त्वप्राप्तिकामोमोक्षिकामः सर्वकामोरुद्रएकादशगुणश्च द्वितीतामिरेकादशभिर्महारुद्रः एतैरेकादशभिरतिरुद्रः स्याज्जपांते इमारुद्रायेतिजपंनिवेदयेत्॥ द्वापइत्यष्टांगं प्रणम्यविकिरुदे तिविसृज्यशिरूपोविहरेत् शिवरुपोवि चरेत् ॥ इति रुद्रसूत्रे प्रथमोध्यायः ॥ एवं चोक्त रुद्र सूत्रीयमहारुद्रानुष्ठानं यथा प्रकृतशाखायाएव मुख्य त्वामुग्राहकत्वमाविष्करोनि तथारुद्रकल्पद्रुमोक्तमपि॥ अतस्तदपि प्रसंगसंगत्यादर्श्यते ॥ अथरुद्रकल्पद्रुमे॥ तत्रादौ संकल्पमारभ्यषड्विधांगमहान्यासपूर्वकं पूर्वं बहुपस्थानांतं श्रीमहारुद्रस्याभ्यर्चनेनविधयज्जाग्रत इ त्यादीनांविभ्राडित्यनुवाकांतानामंगपंचकमंत्राणाम् प्र णवस्येति संणामूमहाव्याहृतीनां रौद्राध्यायस्यवयङ् सोमेति महच्छिरसोर्नतंविदाथेतिद्वयोरुग्रश्चेतिजटा याश्च यथोक्त मार्षादिस्मरणंशांत्याध्यायस्य च ॥ ओं यज्जाग्रतइत्याविभि विभ्राडित्यनुवाकोतैःपंचभि रङ्ग मंत्रैः पूर्वमभिषेकः ॥ ओं भूः ओं भुवः ओं स्वः ओं नमस्ते रुद्रेत्यादिकस्यतमेषांजंभेदध्मः ओं भूः

ओं भुवः ओं स्वः ओं इत्यंतरुद्रस्यदसधाआवृत्तिरभि षेकः॥ओं यज्जाग्र नइत्यादिभिर्द्विश्चाडित्यनुवाकांतैः पूर्वो क्तैः पंजभिरंगमंत्रैःसमन्वितयाकेवलयावाएकावृत्त्याअ भिषेकः ॥ ओं वयङ् सोमेत्यष्ठाभिर्महच्छिरोनाम्नी भिश्च कण्वानांतु वयङ् सोमेतिसत्यभि रीति विशेषः॥ ओं नतंविदाथेतिद्वाभ्यां चेतिदेवपद्धतौ ॥ ओं उग्रश्चे तितिसृभिः सत्पभिर्वारुद्र जटानाम्नीभिश्चेतिपरशुरा मादयः ॥ ओं ऋचंवाचमित्याध्यायेन शांतिकरणं॥ ओं शांतिरितित्रिरुच्चारणमवा॥ अयंप्रकारस्तु ॥ सां गमाद्यंजपेद्रुद्र केवलानिनवांतरा ॥ सांगंसशीर्षकंचांते निरंगमितिकेचन ॥ इतिपरशुरामकारिका कण्वमाध्यं दिनशाखानुसारिणी ॥ अथापरः प्रकारः॥ तत्रादौअ भिषेकमंत्राणांपूर्ववदार्षादिस्मरणं॥ ओं यज्जाग्रतइत्या दिभिर्नमस्ते रुद्र तिरौद्राध्यायां न्तैःषड्भिरंगमंत्रै पूर्व मभिषेकः॥ओं भूः ओं भुवः ओं स्वः ओं इत्यं तस्या ष्ठप्रणवयुक्तस्य रुद्राध्यायस्यैकादशधा आवृत्तिरभिषे कः॥ तदंते ओं वयङ् सोमेत्यष्टाभिः शांत्याध्यायेन चाभिषेक इतिद्वितीयः ॥ ओं यज्जाग्रतइत्यादिभिर्द्वि श्चाडित्यनुवाकांतैः सह प्रथमावृत्तौ अशेषमकानुवा

कानेकादशधा विभज्यैकैकानुवाकान्ता आवृत्तिः कार्या अयं तृतीयः ॥ तत्रेत्थम्प्रकारः रुद्राध्यायस्य प्रथमावृत्तौ ओं वाजश्चमेतिचतसृभिः कण्डिकाभिरभिषेकः। द्वितीयावृत्तौ ओं ऋतं चमइतिचतसृभिः ॥ तृतीयावृत्तौ ऊर्क्चमइतिचतसृभिः॥आश्माचमे तितिसृभिस्तुरीयावृत्तौ ओं अग्निश्चमइन्द्रश्चमेति तिसृभिः पंचमावृत्तौ ओं अंशुश्चमेतितिसृभिः षष्ठावृत्तौ ओं अग्निश्चमेघर्मश्चमेतिद्वाभ्यां सप्तमावृत्तौ ओं एकाचमेति एकयाअष्टमावृत्तौ ओं चतस्रश्चमेत्येकयानवमावृत्तौ ओं त्र्यविश्चमेतिद्वाभ्यां दशमावृत्तौ ओं वाजायस्वाहेतिद्वाभ्यामेकादशावृत्तौअयमेकादशधा विभक्तेनचमकेनाभिषेकः ॥ कौशिकबोधाय नमतएव॥ पाराशरादीनांमतेतु न चमकानुवाकैरभिषेकः ॥ अस्मिन् पक्षे चमकानुवाकानाम् ऋष्यादिस्मरणाभावः ॥ ओं ऋचंवाचमिति शान्त्यध्यायेन शांतिकरणमिति तृतीयः प्रकारः ॥ वक्ष्ये रुद्रविधानं तु पंचांगंसर्वदंपरम् ॥ हृदयम् शिवसंकल्पं शिरः सूक्तं तुपौरुषम् ॥ शिखाद्यः संभृतम् सूक्तमाशु कवचमेवच ॥ वेदवादिभिराख्यातमस्त्रं शतरुद्रियम् ॥ इत्यादि तथाचायमेव रुद्रो

रुद्रैकादशनीरुद्रीतिसंज्ञात्रयंलभते ॥ एतस्यैव रुद्रस्य एकादशावृत्याएकारुद्रीभवति ॥ अयमेवरुद्रोरुद्रैकादशनी लघुरुद्रे तिव्यपदेशभाक्भवति ॥ अयमेकः प्रकारः ॥ लघुरुद्रएकादशनीभिरेकादशभिरुद्रिभिरेको महारुद्रोभवति ॥ अयम् द्वितीयःप्रकारः ॥ एवमेकोदशभिर्महारुद्रै रेको अतिरुद्र इति तृतीयःप्रकारः ॥ बृहत्पाराशरेण तु प्रकारांतरमप्युच्यते॥ शिरसासंहस्ररुद्राणां जप्तेर्दशशतैर्ध्रुवम् ॥ सर्वमन्त्राभवन्त्यस्य ब्राह्मणस्योक्तकारिणः ॥ इति ॥ पुनरुद्रस्योक्ताधिकप्रकाराः तयान्यासादिजालम् रुद्रे इति कर्तव्यताविधिश्च रुद्रकल्पद्रुमेदृष्टे एवाधिकतया व्यक्तीभविष्यति इह तु ग्रन्थविस्तृतिभियैवोपरम्यते ॥ अष्टौ चमकानुवाकानां एकादशधाविभागे रुद्रकल्पद्रुमीयवचनम् ॥ तद्यथा वेदांवेदांध्विरामाश्चरामांरामांध्यकैकेको ॥ द्वौद्वौ मंत्रौपृथक्प्रोक्तौ नमकेचमकस्यकेति ॥ एवंचोक्त पड्गीगोत्तरांगविराजतोयं - नमकचमकमंत्रमयशरीरोमहारुद्ररूपः प्रकृतशाखाविशिष्टःशुक्लयजुर्वेद एवातिजागरूकतयावरीवर्तितराम् ॥ अत एवोक्तंरुद्रकल्पद्रुमकारैः ॥ तद्यथा ॥ षडक्षः पद्रशिवास्यं शशिधरसिरसं पं

रुर्यपोडँषर्चँयात्रयः संपट्टचचूडाप्रतिरथकवचं सप्त दिक ऋङ्मितंच १७॥ मैत्रं सूक्तं तु नेत्रंदशामुनि १७ विहितम् शांभवं षोडश १६ चैशत्रोर्घातार्थमस्त्रं नम कचमकवपुमं त्र रूपोहिरुद्रः ॥१॥तथाचेतादृशरुद्राभाव वच्छाखाध्यायिनांबह्वृचादीनां स्वशाखाधिकारप्रयोज-कमाध्यन्दिनशाखीयगायत्र्युपदेशवत् माध्यन्दिनीयो क्तरुद्रानुष्ठेनेनोपासनमतिप्रशस्तम्॥ यथमिमानिकत यातेनिरोयरुद्रानुष्ठाने तु यथोक्त सांगफललाभोनस्या त् ॥ प्रकृतशाखीयरुद्रानुष्ठाने तु यथोक्तफललाभः सुलभएव॥ यथाप्रकृतशाखिनां कुत इतिचेत् प्रोक्तरी त्यासांगोपाङ्ग रुद्राध्यायरूपस्यप्रकृतशाखाविशिष्ट शुक्लयजुर्वेदस्यसाक्षान्महारुद्राभेदेन ब्रह्मरूपत्वात् ॥ अतोरुद्रस्वाहाकारादावपिप्रकृतशाखीयरुद्रानुष्ठानेन महारुद्रोपासनं अत्युत्तमोतम फलजनकतया मुख्य मिति सिद्धम् ॥ एवम् च कर्मकाण्डे कुण्डमण्डपीयद क्षिणद्वारानुष्ठानं यथाप्रकृतशाखाविशिष्टशिष्टस्यैव मुख्यतया अभिहितंथा॥तद्धोमपासनाकाण्डेपि गायत्रीरु द्राद्युपासनम् मुख्यतयाप्रकृतशाखा विशिष्टशिष्टस्यैवे त्यवधेयं॥ अथपुनःप वैवादिनोप्यपूर्वतयैवशंकामंकुरयं

तितयथा आश्वलायनः ॥ यः सनाभिन् विभक्तांश्च ज्ञातिदायादबान्धवान् ॥ याजयेत्सर्वयज्ञेषु, पितृभ्रातृसुतैर्विना इति ॥ पुनः स एव याजयेत्सर्वयज्ञेषु ज्ञाति दायादबान्धवान् ॥ नयाजयेत्पितापुत्रं भ्रातृश्चैवपरस्परम् ॥ किं च ऋत्विजोऽवृणुयात्न्यूनानतिरिक्तान् ॥ मातृतः पितृतश्चेति बौधायनोपि ॥ अथ ऋत्विक् वर्णनं विज्ञायते ॥ ब्राह्मणा ऋत्विजोयोनिगोत्रश्रुतवृत्तसम्पन्नाः इत्यादि॥पुनः सएवब्राह्मणादीनांयोनिग्रहणमत्यन्तायद्विपयन्ननियमः इदमप्यवादीत् ॥ संग्रहहेतुते लङ्ककर्णाटकलिङ्गबङ्गसम्बन्धिनो माथुरीया इव विप्राः ॥ श्राद्धे विवाहेखलुपाकयज्ञे न पूजनीया अपि शंभुतुल्याः ॥ १ ॥ इत्यादिवचनैर्वैवाहिकाद्यखिलमङ्गलकृत्येषु हव्यकव्याद्यखिलकर्मसुच तथा यागाद्यखिलकुण्डमण्डपीयदक्षिणाद्वाराधिकारेष्वपि येषां विदुषां योनादिसम्बन्धस्तेषामेवोक्तकर्मस्वधिकारोनान्येषां शुक्लयजुर्वाणान्तु योनसम्बन्धाभावान्नाधिकारः॥किन्तु कृष्णयजुषाणामेवेतिवङ्गचोः पुनः प्रत्यवतिष्ठते इतियत् ॥ तदत्यन्तासमञ्जसमित्युच्यते ॥ नायं नियमः कर्माधिकारे योनसम्बन्धएव नियामकइति ॥ यथा

क्षत्रियादिभिर्मं इत्युक्ताद्विषु ब्राह्मणाएव शक्नुवन्ते इतियत् तन्नस्यात् ॥ योनसम्बन्धाभावात् ॥ किञ्च श्राद्धादिष्वपिनिर्णयसिन्धुकारादिभिर्यदुक्तं पितृस्थाने बह्वृचादिभिः स्वशाखीयएवपूज्यः पितामहस्थानेतुया जुषएव एवं याजुषैरपि तन्त्रयाजुषशब्देन यदि वैश म्पायनीयएवेति चेत् वाजेवाजेइतिश्रुतिर्वाजिब्राह्मणब्रा थेनाविषयाउपरुद्धेत ॥ एवमेव यजनकर्मण्यपि क्षत्रि यादियाजने यौनसम्बन्धस्याप्रयोजकत्वम् । अपिच बौ धायनेनापि ब्राह्मणादीनां योन्यादिग्रहणं अत्यन्ताप द्विषयन्न नियमइत्युक्तम् ॥ विज्ञोक्तसंग्रहवचनोदित तैलक्षौद्रादिसमुच्चयेपि शुक्लयाजुषाणामप्रवेशात् य थोक्तरीत्या तेषां सर्वत्र सर्वेष्वत्वमव्याहतमेव ॥ न चोक्ताश्वलायनवाक्ये योनपदाग्निप्तसनाभिपदश्रवणे न स्वज्ञातिदायादबन्धूनामेव यजनादिकर्मणिसोमपा नेडाभक्षादिप्रशस्तम् ॥ न योनसम्बन्धरहितानां शुक्ल याजुषाणामिति वाच्यम् ॥ माध्यन्दिनशाखाध्यायिनां शुक्लयाजुषाणां स्वान्यशाखीयैः सह यौनसम्बन्धरा हित्येमहत्तरं विनिगमकबीजमस्ति तत्किमिति चेन्मातु लभगिन्यादिभिः पाणिग्रहणाभाव एवेतिवदामः ॥ त

भ्योवारयतीति अप्रसिद्धत्वान्नस्तावकम् ,स्यात् ॥ अत स्तेनापिविधिः कल्प्यतेत इत् ॥ न चायंरागप्राप्तस्या नुवादः ॥ रागप्राप्तस्याभागले दृष्टान्ततासंभवेन ऋ कृमन्त्रविरोधात् ॥ अन्यथादृष्टान्तवद्रागेपि विगीतता संभावनास्यात् ॥ तस्मात्तदंशेविगीतत्वम् वाच्यम् ॥ तच्चविधिकल्पनमन्तराअनुपपन्नम् ॥ अयं च विधि रसपिन्डानित्येकवाक्यतया अपूर्वविधिरेव ॥ नच राग प्राप्तेविवाहेकथमपूर्वविधिः ॥ परिसंख्यांलेपिस्थित्यभा वात् ॥ परिसंख्यापिसकल तद्विधायकवाक्यैकवाक्यतये तिदिक ॥ तथाचमातुलकन्याविवाहस्योकश्रुतिस्मृत्यादि प्रमाणैर्विधानात्तथैव शिष्टाचाराच्चसः विधिरेवेतिवे न्न ॥ आयाहीन्द्रेत्यादिश्रुतौ साक्षान्मातुलकन्यापरिण य विधिबोधकलिङादि पदाभावान्न तस्यविधित्वम् ॥ किंचतद्विधिबोधकाः अन्याः श्रुतयोपिनोपलभ्यंते यन्मूलो क्तस्मृति नांतद्विधायकत्वमुवक्तव्यम् ॥ तस्मादविधि रेवसः ॥ अन्यया तदविधायकस्मृतदोव्याकुप्येरन् ॥ ननु कृष्णार्जुनप्रद्युम्नादीनामुद्वाहारीयमाचारम् दृष्टा कलावपि तथा चारोविहित इति चेन्न ॥ गोत्रान्मातुः सपिण्डाच्च विवाहोगोवधस्तथेति ब्रह्मांडपुराणीयवं

चनेन कलिवर्ज्यंत्वप्रतिपादनात् ॥ युगान्तरविषयक व्यवहितसंबन्धाच्च ॥ अत एव प्रद्युम्नार्जुनादौव्यव हितसम्बन्ध एवेति मीमांसावार्तिककारैरप्युक्तम् ॥ किं च ईश्वराणां वचःसत्यंतथैवाचरितंक्वचित्॥इत्या दिवचनाच्च ॥ अन्यथाप्रजापति कृतस्वदुहितृपरिण यम् श्रुत्वाकलिकालीनैरपि तथा चरितम्विहितंस्या त् ॥ तस्यधर्मव्यतिक्रमसाहसरूपत्वात् ॥ अत एव अनुष्ठितं तु यद्देवैर्मुनिभिर्यदनुष्ठितम्॥नानुष्ठेयंमनु ष्यैस्तत्प्रोक्तं धर्मंसमाचरेदिति बौधायनेनाप्य भिहितम् ॥ तयोक्तमातुलेय्यादिपरिणयोऽविधिरेव ॥ न च सापिन्ड्य प्रदीपकारोक्तरीत्यासः विधिरेवेतिवा च्यम् ॥ तस्यविधित्वाभावात् ॥ तथा हि विधिरत्यन् तमप्राप्तौनियमः पाक्षिके सति ॥ तस्यचान्यत्रचप्रा प्तौपरिसंख्येतिगीयते ॥ तथाचात्र प्रमाणांतरेणाप्रा प्तस्यस्य प्रापकोविधिरपूर्वः सः वक्तुमशक्यः ॥ तस्यरा गप्राप्तत्वात् ॥ तथा पक्षेप्राप्तस्य प्रापकोपिविनियः मोपिवक्तुं न शक्यते ॥ तस्यपक्षे प्राप्त्यभावात् ॥ यदि परिसंख्याउच्येत ॥ सोपिवक्तुमशक्यः उभयो श्च युगपत्प्राप्तौ इतरव्यावृत्तिपरोविधिः परिसंख्या

विधिः ॥ यथा पंचपचनखाः भक्ष्याइति ॥ अत्र पंचन
खापंचनखभक्षणयोर्युगपद्रागप्राप्तत्वेनेदंअपंचनखभ
क्षणनिवृत्तिपरं यथातथाप्रकृतेमातुल कन्याअमातुलक
न्यापरिणययोरुभयोरपिरागतःप्राप्तत्वेन परिसंख्यया
मातुलककन्यापरिणयएवविधेयः इतिनागोजीभट्टाश
यः ॥ कुतस्तद्विधायक वाक्यानुकूल्यादिति ॥ इदम
त्यन्तासमन्जसम् ॥ तत्रयदिपरिसंख्यया अमातुलक
न्यापरिणयनिवृत्तिपूर्वक मातुलकन्यापरिणय एव वि-
धीयेत ॥ तर्हि गुरुतल्पीसविज्ञे यो इत्यादिभूयाम् सि
चचांसित्वाकुर्य्ये रन् ॥ इष्टापत्तौ तु सपिन्डाविवाहः
प्रसज्जे त ॥ अपिचासापिन्डामिति याज्ञवल्क्योक्त-
वचनीय विशेषणम् वैयर्थ्यं मापद्ये त ॥ अपि च भ-
गिनित्व समानाधिकरणम् यदिभार्यात्वम्चेत्तर्हिमा
तृत्वसमानाधिकरणेन तेनकिमपराद्धं ॥ एवम् सति
महदनाचारप्रयुक्तः संकर एवपर्यवस्यति ॥ अतो मा
तुलेय्यादिपरिणयो अनाचारएवेतिसिद्धम् ॥ किंच
तृतीयेसंगच्छावहै इति शतपथीयार्थवादश्रुत्याअस्या
पिकाख्यया मातुलकन्यापरिग्रह विधानासंभवात् ॥
नचार्थवादानांविधि ऊेपत्वेन प्रामाण्यात् तृतीयेसंग-

च्छावहै इति अर्थवादकल्पितेन मातुलकन्यांपरिगृह्
णीयादिति विधिनातद्विधानंसंभवत्येवेति वाच्यम् ॥
तृतीये संगच्छावहै इत्यादेस्तदंग मूलकलौकिकार्थ
वादरूपतया विधिकल्पकत्वासंभवात् ॥ अलौकिका
र्थवादस्यैव विधिकल्पकत्वात् ॥ यथातरतिमृत्युमृतर
तिब्रह्महत्यांयोश्वमेधेन यजतेत्यत्र मृत्युब्रह्महत्यातरण
कामो अश्वमेधेनयजेतेति विधिःकल्प्यते ॥ यदि अर्थ
वादमात्रस्य विधिकल्पकत्वम् चेत्तर्हि ॥ गर्भेनु नौज
नितादंपती कर्देवस्त्वष्टासविताविश्वरूपइतियमयमु
नासंवादरुपस्यार्थ वादस्यापि साक्षाद्भगिनी परिग्र-
हकल्पना स्यादिति न किंचिदेतत् ॥ अपि च ताद्द
शऋग्मन्त्र घटकमातुलस्य योषेत्यत्रयोषा शब्दस्य
स्त्री सामान्यवाचकतया कथं विशेषतया दुहितृवाच
कत्वम् ॥ ननु सामान्यशब्दस्यापिलक्षणयाविशेषवा
चकत्वात् योषाशब्देन विशेषतोदुहितृप्रतिपादनं सं
भवत्येवेतिचेन्न ॥ तथा सतितत्समभिव्याहृतमातुलश
ब्दस्यापिसपत्न मातुलादौलक्षणास्वीकार्या॥तथा च
सपत्न मातुलकन्यापरिणय एवानेन वचनेन प्रतिपा
द्यते इति चेत्तर्हि मातृगोत्रवर्जनस्मृतिर्निराबाधैव

स्यात् ॥ अपि च येषांविशेषतोन मातृगोत्रनिषेधस्ते षामपि साक्षान्मातुलजन्या परिग्रहोनोचितः ॥ मातृ तः पंचमादूर्ध्वंपितृतः सप्तमात्तथा ॥ ग्रहस्थउद्वहेत्क न्यामन्यथा गुरुतल्पगइत्यादिस्मृतिवचनेमांतृपक्षे पं चमादूर्ध्वं सापिन्ड्यनिवृत्तिमभित्येव विवाहस्याभिधा नात् ॥ पंचमादर्वाग्विवाहानुष्ठाने दोषस्यापिश्रवणा त् ॥ तस्मात्साक्षान्मातुल कन्यापरिणयो केषांचिद्दाक्षि णात्यानामनाचार एव तथा च बहरूप तिरुवाच ॥ उ द्वुह्यतेदाक्षिणात्यैर्मातुलस्यसुताद्विजैः ॥ मत्स्यादाश्च नराः पूर्वव्यभिचाररताः स्त्रियः ॥ उत्तरेमद्यपाश्चैव स्पृश्यनॄणांरजस्वलाः ॥ इत्यादि ॥ किं च तत्रागप्रा प्तस्याभागत्वे दृष्टान्तासंभवरूपो विरोधोपि नाशंक नीयः ॥ तादृशभागस्य दृष्टान्ततातुयुगांतरीय कृ ष्णार्जुनादिक्षत्रियविषया ॥ न तु प्रकृतकलिकालीन द्विजालिविषया ॥ तस्याः विरुद्धसम्बन्धत्वात् ॥ एव मेवबौधायनोप्याह ॥ पंचधात्रिप्रतिपत्तिर्दक्षिणतः ॥ अनुपनीतेनभार्यया च सहभोजनं मातुलदुहितृपितृ ष्वसृदुहितृपरिणयः ॥ इत्याद्यारभ्यसर्वदेशेष्वनाचारो पथितामवूलचर्व्रेण मित्यन्ते नानाचारकीर्तनात् ॥ या

ज्ञवल्क्योपि एव मेवावादीत् ॥ अस्वर्ग्यंलोकविद्वि ष्टंधर्मं मप्याचरेन्नतु इत्यादि निर्णयसिंधुकारोपि एवमेव निर्णीतवान् ॥ गोत्रान्मातुः सपिन्डाच्चवि वाहोगोवधस्तथा॥ नराश्वमेधोमद्यं चकलौवर्ज्यंद्विजा तिभिः ॥ इदमेववचनमनाचारत्वेन परिगृह्यव्याख्या तम् ॥ गोत्रात् गोत्रजायाः पितृश्वसुः मातुः सपि ण्डात् मातुलादित्यादि किं च तृतीयांमातृतः कन्यां तृतीयां पितृतस्तथा ॥ शुक्लानचोद्वहिष्यंति कलौपा पविमोहिताः ॥ इतिशुक्लयाजुषाणामेव मातुलेयीप रिणयाभावो बोधितः ॥ एवं धर्मसिन्धु कारोपि ॥ अथ मातृगोत्रवर्जननिर्णयः ॥ तत्र मातृगोत्रपदेनमा तामहगोत्रमेववर्ज्यं ॥ तच्चगन्धर्वादिविवाहोढा पु त्राणाम् सर्वेषांवर्ज्यं ॥ ब्राह्मविवाहोढापुत्राणांसर्वेषां मातामहगोत्रं न वर्ज्यं ॥ किं तु माध्यन्दिनानामेव मातृगोत्रम् माध्यन्दिनानामिति सत्याषाढवचनात्॥ तथैवशिष्टाचाराच्चेत्यादि ॥ न चोक्तरीत्यामातुले य्यादिपरिणयोशिष्टाचार इति वाच्यम् ॥ तत्रशिष्ट त्वम् तु वेदोक्तत्वज्ञानेन वेदविहितकर्मकारित्वमेव ॥ वेद विहिताहिंसा दिकर्तरिवोद्दे अतिप्रसंगभंगाय

तृतीयांतम् ॥ तथा च मातुलसुतोद्वाह रूपकर्मणः वेदविहितत्वाभावात् तादृशकर्मकर्तृषुशिष्टत्वासंभव एव संभवति ॥ किं तु मातुलगोत्र प्रवरैक्यमेवा स हिष्णूनामाध्यन्दिनानामेव तादृशशिष्टत्वं सम्यकुसं ङ्जाघटीतीतिज्ञेयम्॥अतएवधर्माधिकारैरपि हैं त्वतरे णशिशष्टत्वम् तेष्वेवनिश्चितम् ॥ किं च शिष्टत्वा भिमानेनपितृसमानपिन्डयापितृष्वसुसुतया तथामातृ समानपिन्डयामातुल सुतयापरिणय पक्षपातेन तद्दे शे प्रतिकूलानामपि स्मृत्यादीनामनुकूलत्वं बलादेवा कल्प्यपुनरनाचारेष्वाचारत्व मारोप्य तदाचरणे न शिष्टत्वमपि स्वस्मिन्नेवारोपयन्ति न वास्तवंत दित्यवधेयम् ॥ अन्यथा अनाचारेष्वाचारत्वसंपरयासं करःस्यात् ॥ अत एव बौधयनवद्विद्यारण्य स्वामि चरणैरपि मातुलकन्यापरिणयो केषांचिद्दाक्षिणात्या नामनाचार एवेतिकंठरवेणोक्तमधिकरणरत्नमाला यांम् ॥ तद्यथा ॥ योमातुल विवाहादौ शिष्टाचारः समानया॥ इतराचारवन्मात्वममात्वं स्मार्तवाधनात्। स्मृतिमूलोहिसर्वत्र शिष्टाचारस्ततोत्रच ॥ अनुमे या स्मृतिः स्मृत्यावाध्याप्रत्यक्षया तुसा ॥ केषु चि

दक्षिणदेशेषु मातुलस्य दुहितरंशिष्टाः परिणयन्ति ॥ सोयम् शिष्टाचारः प्रमाणंशिष्टाचारत्वात् ॥ होलकाद्याचारवत् ॥ इतिचेन्न ॥ स्मृतिविरुद्धत्वेन कालात्ययापदिष्टत्वात् तथा च स्मृतिः ॥ मातुलस्यसुताम् ढ्वमातृगोत्रां तथैवच ॥ समानप्रवरांचैव त्यक्त्वाचान्द्रायणम् च रेदिति ॥ न चस्मृत्याचारयो मूल वेदानुमापकत्वसाम्यात् समबलत्व मितिवाच्यम् ॥ होलकादिसदाचारस्य मन्वादिस्मृति वद्वेदानुमापकत्वायोगात् ॥ नहि इदानींतनाः शिष्टाः मन्वादिवद्देशकालविप्रकृष्टं वेदंदिव्यज्ञानेन साक्षात्कर्तुं शक्नुवन्ति ॥ येनशिष्टाचारोमूलवेद मनुमापयेत् ॥ शक्नोतितु यः कोपि शिष्टोयत्रक्वापिदेशविशेषे कालविशेषेचयंकंचिदपि होलकाद्याकारस्य मूलभूतम् स्मृतिग्रन्थ मवलोकयितुम् ॥ तस्मात् शिष्टाचारेण स्मृतिरेवानुमातुमुशक्यते न तु श्रुतिः॥ अनुमिता च स्मृतिः विरुद्धयाप्रत्यक्षस्मृत्या वाध्यते ॥ अत एवाहुः ॥ आचारात्तु स्मृतिं ज्ञात्वास्मृतेश्चश्रुति कल्पनम् ॥ तेन चांतरितम् तेषांप्रामाण्यम् विप्रकृष्यते ॥ १ ॥ तस्मादप्रामाण्यमीदृशा चारस्याभ्युपगंत

व्यमिति ॥ प्रथमाध्यायस्यतृतीयपादीय पंचमाधिकर
म् ॥ तस्मात् बह्वचिद्वीनांमातुलेयग्रादिपरिणयो अ
नाचारएवेति सिद्धम् ॥ अत्रकेश्चिदुच्यते ॥ मातुल
स्य सुताम्रूढ्वामातृगोत्रान्तथैवच ॥ समान प्रवरांचैव
त्यक्त्वेचांद्रायणं चरेदिदंसामान्यवचनम् अत्र प्रवर
युक्तम् मातृगोत्रम् वर्ज्यमित्युक्तत्वात् ॥ इदमसमं
जसम् ॥ तत्रमातृगोत्रवर्जस्वोक्तिः किं मातृगोत्रत्व
रूपसामान्यधर्मेण उतप्रवरविशिष्टमातृगोत्रत्व रूप
विशेषधर्मेणेति ॥ तत्र नाद्यः ॥ प्रवरविशिष्टमातृगोत्रं
त्वरूपविशेषधर्मेण तद्गोत्रं वर्ज्यं मित्युक्तत्वात् ॥
नापिद्वितीयः तादृशविशेषधर्मेण तद्गोत्रवर्जस्वोक्
तेः इदंत्वावच्छिन्नस्य सामान्यवचनात्वसाधकत्वात् ॥
कथमयंहेतुस्तस्य सामन्यवचनत्वसाधकः येनतत्सा
मान्यवचनंभवेत ॥ किं च मातुलस्यसुताम्रूढ्वेत्यने
नैवमातुलकन्यापरिणये सूचितेसति तेनैवमातृस
मानगोत्रांतत्समान प्रवरामिति पदद्वयस्य चारितार्थ्या
त्तत्पदद्वयम् व्यर्थंस्यात् ॥ अतस्तत्सार्थक्यायप्रति
बन्धकवैलक्षण्यमवश्यंवक्तव्यम् ॥ तद्यथामातुलसु
तापरिणयं प्रतिमातृसपिन्डयं मुख्यनया प्रतिबन्ध

कम् ॥ अमातुलसुता परिणयं प्रति सापिन्ड्यस्या प्रतिबन्धकत्वेपि तत्रमातृसमानगोत्रत्वं प्रतिबन्धकम् । यत्र भृग्वादिगणेषु गोत्रप्रसक्तिः ॥ तत्र समानप्रवरत्व मेव प्रतिबन्धकम् ॥ एवम् . चेतत्त्रितयायतप्रतिष्ठंप्र तिबन्धकता निरूपितप्रबध्यताशालि तत्तत्कन्यापरिण त्रयंसंपन्नम् ॥ तथा च विशिष्ट परिणीततत्कन्यात्या गमुद्दिश्यचांद्रयणाख्यंप्रायश्चिता चरणमुविधीयतेति उद्देश्यविधेयभावेसमुदिते सति उद्देश्यसिद्धिरेवविधेय स्य फलमिति न्यायात् तादृशविधेयफलीभूतविशिष्टप रिणीततत्कन्यात्यागसिद्धि रेववेधंपरामकूतम् परमति. जागरुकतयाबरीवर्तितराम् ॥ तथाचात्रसामान्य विधे रदर्शनात् ॥ तादृशप्रवरविशिष्ट मातृसमानगोत्रस्या प्रतिबन्धकत्वाच्च ॥ प्रवरविशिष्टमातृ गोत्रवर्ज्यत्वोक्त त्वहेतुना इदं त्वावच्छिन्ने सामान्यवचनत्वसाधनत्व प्रयासः वदतोव्याघातत्वप्रतीयते ॥ अपि च मातुलस्ये ति वचनादिमोपस्थित मातुलशब्दस्यमुख्ययावृत्या मातुलत्वा वच्छिन्नवाचकतया तदवच्छिन्नत्वेनसप त्न मातुलस्यापिसंग्रहात् ॥ तत्कन्यापरिणय प्रसक्तया परिणीतसपत्न मातुलकन्या त्यागमुद्दिश्यतादृशप्रा.

पश्चित्ताचरणापत्तेः ॥ अपि च तत् व्यवहितोच्चरितमातृ शब्दस्यापि मातृत्वावच्छिन्न वाचकतयातत्वावच्छिन्नत्वेन ससुतसपत्न मातुःसंग्रहेणपरिणीततत्सुतात्यागमुद्दिश्यताद्दश प्रायश्चित्ताचरणापत्तेः ॥ समानप्रवरस्थलेप्येवमेव ॥ एवंचैतद्दोषजाल मनवलोच्यैव कथंपत्सामान्यवचनमिति ॥ पुनर्वादिनोच्यते ॥ तदपवादः ॥ प्रवरान्पितृगोत्रेषु मातृगोत्रे न चिंतयेत् ॥ गोत्रमेवत्यजेन्मातुरितिकात्यायनोब्रवीत् इति ॥ किंचात्र मातृपदस्य मुख्यामुख्यमातृ परत्वेसपत्नमातृणांसपुत्रापुत्रभेदेन बाहुल्यात्सर्वासां गोत्रवर्जनेप्राप्तेगोत्रं मातुरपुत्राया वर्जयेत्प्रवरान्नतु । सपुत्रायास्तु नोगोत्रं प्रवरान्नतु चिंतयेदित्यादि ॥ एवंचापुत्रसपत्नमातृ गोत्रमेववर्ज्यमित्युच्यते ॥ इदमत्यन्तातमंजसं ॥ प्रथमवचने तदपवादकत्वासंभवः ॥ तत्पदपरामृष्टस्यवचसः अध्यारोपत्वाभावात् । द्वितीयवचनीयमातृशब्दस्यसपत्न मातृपरतया मुख्यमातरितात्पर्याभावात् तद्गोत्रचिंतनं विधेयम् न वा इतिसंदेहः समुदेति ॥ प्रवरान्नतु चिंतयदित्यनेन प्रवरचिंतनस्यैव निषेध इति चेत् ॥ तस्यापुत्रसपत्न मातृपरतया मुख्यमातरि

तात्पर्यस्यअसंभवात् ।। तत्र प्रवरचिंतनंविधेयमेव॥ ए
तदत्रापि प्रवरचिंतनंविधेयमिति चेत् ॥ विनिगमना
विरहात् तत्र गोत्रचिंतनमपिनस्यात् ॥ तत्रोभयचिंत
नाभावेतु मातृसापिन्ड्य भंग प्रसंगेन शुक्लयाजुषा
णामपि मातुलकन्यापरिणयः प्रसज्येत ॥ तत्समान
गोत्रतत्समान प्रवरयोरप्रतिबन्धकतयानिरुक्तविधिरपि
व्याकुप्येतेतिनकिंचिदेतत् ॥ वस्तुतस्तुधर्माब्धौ त
त्रगोत्रलक्षणम् ॥ विश्वामित्रो जमदग्निर्भरद्वाजोथ
गौतमः ॥ अत्रिर्वशिष्ठः कश्यप इत्येते सप्त ऋ
षयः ॥ सप्तानामृषीणां अगस्त्याष्टमानां यदपत्यंत
द्गोत्रमित्याचक्षते ॥ यद्यपिकेवल भार्गवेष्वार्षिषेणा
दिषु केवलांगिरसेषु हरिताद्दिषु च नैतल्लक्षणं भृग्वंगि
रसोरष्टऋषिष्वनंतर्गतत्वात् ॥ तथा प्यत्रप्रवरैक्या
देवाविवाहः ॥ यद्यपिगोत्राणिअनंतानि ॥ गोत्राणां
तु सहस्राणि प्रयुतान्यर्बुदानिचेत्युक्तेः ॥ तथापिऊन
पंचाशदेव गोत्रभेदाः संति ॥ व्यावर्तकप्रवरभेदानां
तावतामेव दर्शनात् ॥ प्रवरलक्षणं तु गोत्रवंशप्रव
र्तक ऋषिणांव्यावर्तकाः ऋषिविशेषाः प्रवराः इत्ये
वं संक्षेपतोज्ञेयम् ॥ तत्रसमान प्रवरत्वं समानगोत्र

त्वं च पृथक् पृथक् विवाह प्रतिबन्धकंज्ञेयम् ॥ तत्र प्रवसाम्यं द्विविधं एकप्रवरसाम्यं द्वित्रिप्रवरसाम्यंचेति ॥ तत्रभृग्वंगिरोगणे तरेषु एक प्रवरसाम्यमपि विवाह प्रतिबन्धकम् ॥ केवलभृगुगणेषु केवलांगिरोगणेषु एक प्रवरसाम्यं न विवाह प्रतिबन्धकम् ॥ किं तु त्रिः प्रवरेषुद्विप्रवरसाम्यं पंचेषुत्रिःप्रवरसाम्यंविवाह प्रतिबन्धकम् ॥ पंचानांत्रिषुसामान्याविवाहस्त्रिषुद्वयोः ॥ भृग्वं गिणेंष्वेवंशेषे ष्वेकोयिवारयोंदितिवचनात् ॥ समानगोत्रत्वमृतु ॥ एक एवऋषिर्यावत्प्रवरेष्वनु वर्तते ॥ तावत्समानगोत्वमृते भृग्वं गिरोगणादिवचनेन एकऋषिकतृकोयादृशप्रवराधिकरणकः प्रवेशः स्तादृशप्रवरत्वं सगोत्रत्वम् ॥ तद्भिन्नत्वमसगोत्रत्वम्॥ एवमेव पंचप्रवराधिकरणक एक द्वित्र्यन्यतमप्रवरसमानत्वम् सप्रवरत्वम् ॥ तद्भिन्न त्वमसप्रवरत्व मितिज्ञेयम् ॥ एवं च मातृ गोत्रेप्रवरचिंतनाभावे भृग्वंगिरोगण भिन्नेषु तादृशसमानगोत्रत्वमेव विवाहप्रतिबन्धकम् ॥ भृग्वादिगणेषुतादृश समानप्रवरत्वमेवविवाहप्रतिबन्धकमितितत्त्वम् ॥ तथा च केचिन्माध्यन्दिनेकदेशिनः निरुक्तवचनैर्मातृगोत्रे प्रवरचिंतनमकुर्वाणास्ते

षांभृग्वादिगणे.तरगणेषु समान समानगोत्रत्वमेववि
वाहप्रतिबन्धकं भृग्वादिगणेषु तादृशसमानप्रवरत्वमे
एवंसत्यपिप्रतिबन्धके विवहेयुश्चेत्तेषां वङ्कचंद्विन्मा
तुलकन्यापरिणय दोषवत्तयाप्रकृतशाखा बहिर्भूतत्वं
स्यादित्याद्यवधेयम् ॥ एवं च मातृ गोत्रप्रवरैक्यमप्य
धर्म एवेत्यभिमानेन मातुल भगिन्यादित्ष्वसुसतया
च सद्दोद्वाहोमहाननाचार इति तदाचारजन्यपापभीरु
भिर्माध्यन्दिनैः सहतेषांयौवनसंबंधाभावेपियथोक्तशिष्टा
नांसदाचारपराणामपि शुक्लयाजुषाणां अध्वर्यवादि
कर्मणिप्रोक्त रीत्यामुख्यत्व मव्याहत मेवेतिसिद्धम् ॥
न च यत्र कन्यादानं तत्रैव हविर्दानमिति व्याप्तिभंग
प्रसंगः स्यादितिवाच्यम्॥ क्षत्रियादौव्यभिचारात्॥ ना
पियत्रकन्यासंबन्धा भावस्तत्रहविः संबधाभावः इति
व्यतिरेकव्याप्तिरपि ॥ ब्राह्मणक्षत्रियेव्यभिचारात् ॥
ब्राह्मणक्षत्रियोनाम ब्राह्मणसंस्कारेण ब्राह्मण्यवान् क्ष
त्रिय वत्याजीवनवांश्चयः सः ब्राह्मणक्षत्रिय इत्युच्य
ते ॥ तत्र कन्यासंबंधसत्वेपिहविः संबंधाभावात् ॥ ए
वं च कन्यादान योग्यतासमानाधिकरणा हविर्दानयो
ग्यतेत्ययंतावदनियम एवेतिफलितं ॥ तथा च प्रकृत

शाखाविशिष्टःशिष्टः बह्वृचादिभ्योऽप्यपूज्य इति व्यव स्थितम् ॥ नन्वस्मत्पूर्वजैर्येभ्यो हविर्नदत्त अस्माभि रपि तेभ्योहविर्देतुकथंशक्यते पूर्वैराचरितं कुर्यादन्य थापतितो भवेदितिचेन्न ॥ पूर्वजैरमिमानिकतया शा स्त्रपुरःस्यहविर्नदत्तं चेदपि स्वेनानुलंघ्य शास्त्रं तस्मा त्तं हविर्देयमेव ॥ तस्माच्छास्त्रं प्रमाणंते कार्याका र्ये व्यवस्थिताविति भगवदुक्तेः ॥ ननु यजुषां बहुशाखा त्वात्संदेहेसमुपस्थिते ॥ तत्र बौधायनंग्राह्यं बह्वृचादि भिरादित्यादिवचनानां कागतिरितिचेदुच्यते ॥ निरु क्त बृहदारण्यायिकायांजनक महाराजयज्ञे अस्मत्कुला धिकृतानामाश्वल शाकलादीनां पराभवपूर्वकब्रह्मिष्ठ पणीभूतगोगस्वीकरण धुरीणयाज्ञवल्क्यो त्कर्षंभसह द्भि बह्वृचादिभि समत्सरं यातयाममपिबौधायनं यजुर ध्ययं वेग्रहोतं ॥ यथा जगत्प्रकाशकादित्योत्कर्पमस हिष्णुना चक्षुष्मतापुरुषेणदीप प्रकाशस्तद्वत्। एवं कृ ष्णयाजुषै वैशंपायनादिभिरपि प्राप्तब्रह्महत्या पापा पाकरण प्रायश्चित्ताचरणावसरेष त्स्वल्पकालेन एक कर्तृकं तदन ल्पकालेनाने कतृकंमाभूयादितिगौरवा भिमानवंतं गुरुभक्तिमग्नतन्धीममन्तमपि सच्छिष्यम्

याज्ञवल्क्यं शिष्यबुध्यातिरस्कृत्य स्वशाखाभिमानिक तया स्वशाखीयेभ्येर्वाध्वर्यवं समर्पितमिति प्रतीय ते ॥ विष्णु पुराणीयपंचमाध्याये ॥ अथाहयाज्ञवल्क्य स्तुकिमेभिर्वहुभिर्द्विजैः॥ क्लेशितैरल्पसारैश्च चरष्येहं सुदुष्करम् ॥ १ ततः क्रुद्धोगुरुः प्राहयाज्ञवल्क्यमहा मते ॥ मुच्यतांयत्त्वयाधीतम् मत्तोविप्रावमानक ॥२॥ याज्ञवल्क्य स्ततप्राहभक्तयातत्ते मयोदितम् ॥ ममाप्य लंत्वादाधीतं यन्मयातदिदंद्विज ॥ ३ ॥ पराशरोवा च ॥ इत्युक्त्वारुधिराक्तानि सरूपाणियजूंषिसः छर्दयि त्वाददौतस्मैययौ चस्वेछायामुनिः ॥ ४ ॥ यजूंष्यथवि सृष्टानियाज्ञवल्क्येन वैद्विजाः ॥ जग्रहुस्तित्तिराभूत्वा तैत्तिरीयास्तुतेततः ॥ ५ ॥ ब्रह्महत्याव्रतंचिर्णंगुरुणाचो दितैस्तुयेः ॥ चकाराध्वर्यवांस्तांस्तु चरणान्मुनिसत्त मः ॥ इत्यादि ॥ एवं च प्रचंड मार्त्तंडमंडलापरिचय सचिवैः पेचकनिचवैर्निजपाणि पिहितलोचनै रसज्जनै र्या इलावलये सर्वदासौरः प्रकाशोनास्त्येवेति शतकृत्वः प्रोक्तंचेदपि सूर्योपासकैस्तन्मिहिरमरीचि जीवनवीचि निचयवदलीकमेव मन्यते। तद्वद्वेषादिकलुषित मनीषा वता कृष्णाजुपादीनामपि शुक्लयाजुषविषये स्वापेक्ष

योर्कर्षाभावकल्पनमिस्त्यवधेयं ॥ अथ यजुषांअध्वर्यं वंकर्तव्यमित्यत्र शुक्लेन वाकृष्णेतिद्वापरे संमुदिते सति विनिगमनाविरहादिति पूर्वपक्षिभिराक्षण्यते ॥ यजुष्याविशेषादिति ॥ अत्रोच्यते ॥ इमानिशु क्लानि इत्यादिश्रुतिबुद्धिमालिन्यहेतुत्वत्तद्यजुः कृष्ण मीरितमित्यादिस्मृतिभिश्च शुक्लस्यैव शुद्धत्वेन सरस त्वेन क्रमेण सर्वकर्मब्रह्मप्रतिपादकत्वेन व्यवस्थितप्र करणवत्वेन च परंमुख्य यजुर्वेदलक्षणीभूतमंत्राभिन्न ब्राह्मणत्वेनापि हरिहरादिरूपेश्वरकर्तृकानुष्ठान साध नत्वादिभिः स्तूयमानत्वात् ॥ स्तूयमानत्वार्थविधेस्ता त्पर्यस्य पूर्वमीमांसायांसं दिग्धेवाक्यशेषादितिसूत्रे जै मिनि मुनिवर्यै र्निर्णीतत्वात् ॥ तथाहि ॥ अक्ताः शर्क राः उपदधातीत्यत्र अंजनसाधनेतैलवसादिद्रवद्रव्यमा त्रे प्राप्तेवासदिग्धेतेजो वैघृतमिति वाक्यशेषेण घृत स्पतेजस्त्वेन स्तूयमानत्वात् ॥ घृतेएवपूर्वोक्तविधेस्ता त्पर्यंनिर्णीतम् ॥ तद्वद्यजुषांअध्वर्यवंकर्तव्यमिति विधेः शुक्लयजुष्येवतात्पर्यंनिर्णीयते ॥ तस्यैवोक्तश्रुत्यादि प्रमाणविपयशुद्धत्वादि हेतुभिः स्तुतत्वात् ॥ किं च विधिः स्वार्थेपुरुषंप्रवर्तयितुं स्तुतिमपक्षते ॥ स्वतः

सुन्दरेपि वस्तुनिस्तुतिं विनालोकेपुरुषप्रवृत्तेरदर्शना
त् ॥ अतः पुरुषप्रवृत्ति प्रतिबंधकीभूतबलवदनिष्टानु
बन्धित्वबुद्धिनिरसक बलवदनिष्टाननुबन्धित्व बुद्धिप्रयो
जकास्तुति समर्पकार्थवाद वाक्यार्थाभावेन पुरुषाणां
प्रवृत्तिर्निरंकुशानस्यात् ॥ किं तत्कुरोत्याशुक्लयजुष्वे
व तादृश प्रवृत्ति जनकेनविधिना अध्वर्युवविधा
नावधारणमित्यादिवहुतरं सूरिवरैः सुचिरं विवि-
च्यरुचिरतया विभावनियम् ॥ अपिच कृष्णयजु
षाअध्वर्यवंनकर्तव्यमिति निषेधोप्युन्नियते ॥ त-
थाहि ॥ कृष्णयजुषः याज्ञवल्क्य कर्तृकवमनगो
चरतेना शुद्धतयानीरस सत्वेनक्रमेण सर्वकर्मब्रह्म-
प्रतिपादकत्वाभावे न च परबुद्धिमालिन्यहेतुतया सर्व
ज्ञ हरिहरादिरूपेश्वरकर्तृकसत्कर्मानुष्ठानाभावेन किं
चिज्ज्ञजीव कोटिघटकापस्तम्भवायुस्तंभादिमनुष्यकर्तृ
कसत्कर्मानुष्ठान साधनत्वादिना निन्दितत्वात् ॥ यथा
कदाचिद्देवैः स्वीयहविर्भागस्वीकारायोप रुद्धाद्विभ्र्कु
रुरोद॥तदासोरोदित्यादिना निंदितत्वात्॥तदश्रुपरिण
तंरजतं वर्हिषिनदेयमिति निषेधस्य यथाप्रत्यक्षत्वं॥त
था कृष्णयजुषाअध्वर्यवं न कर्तव्यमिति निषेधस्याप्र

त्यक्षत्वेपि निरुक्तहेतुभिरनु मातुं शक्यत्वादित्यादिर्स भावनियम् ॥ तथाचोक्तरीत्याशुक्लयजुषैवाध्वर्यवंवि धेयमिति सिद्धम् ॥ अत एवेंद्र प्रमितिनामकबह्वृचं क र्तृ कानुष्ठानविषयीभूत यज्ञादिकर्मणि इंद्रप्रमितिना मकयजमानांगीकृतशुक्लयाजुषऋत्विक्भावस्यभारता दौश्रवणात्॥ किं च शुक्लयजुषः कृष्णोपकारकतयापि मुख्यत्वं तद्यथा॥अप्यश्वमेधगर्भस्येति वाजसनेयकम् ॥ पूर्णाहुतिं वा कुर्यादिति वाजसनेयकम् ॥ अल्पशीरो माणि वापयेदिति वाजसनेयकम् ॥ इत्यादिना अप- स्तम्भः सूत्रयाञ्चकार ॥ अतएव मच्छाखाप्रत्ययं हि ताकुतः सूत्रात्मनोगतिरिति कालिकाखण्डीययाज्ञव- ल्क्योक्तिरपि सा साधुसंगच्छते ॥ किञ्च वैशम्पाय- नीयापस्तम्भाद्यपेक्षितेति कर्तव्यताप्रकाशकतया का त्यायनसूत्रस्योपकारकत्वमपि ॥ अन्यामाध्यन्दिनीशा खापरशाखोपयोगिनि इत्यादि वचनादित्यवधेयम् ॥ एवञ्चेतावतोक्तश्रुत्याद्यखिलप्रमाणगणवता प्रबन्धेन काण्डत्रयनियन्त्रितवेदत्वावच्छिन्नस्य पूर्वकांडीययज मानकर्मणि पूर्वमीमांसाद्यनुकूलतया शुक्लयाजुषाणा मेव दक्षिणद्वाराधिकारमुख्यतानिश्चयपूर्वकमुपासना

कांडेपि गायत्रीरुद्राद्युपासनामुख्यत्वस्थिरीकारमका-
र्षीत् ॥ इतः परन्तु स्थूणानिखननन्यायेन तृतीयेज्ञा
नकांडेपि तेषामेव मुख्यत्वनिश्चीयते ॥ अथद्वापारादौ
त्रिकालज्ञः पाराशरमुनिवर्यः यथावेदविभागात्पूर्वमेवा
यातयामंसारवत्तरं शुक्लयजुर्भागं याज्ञवल्क्यमुद्दिश्य
भानौनिहितवान् ॥ ततः याज्ञवल्क्योपि पूषाणंसन्तो
ष्यनैजंभाममवापेत्युक्तास्यायिकास्थापनेन सार्वज
नीनमेव ॥ तद्वदस्मिन् प्रवलकलिकालेपि वेदोदितध-
र्मावनायतत्प्रतिपादककाण्डत्रयात्मकवेद व्यवस्थाप
नाय चपरमकरुणार्णवःसाक्षादन्नपूर्णारमणएव द्विजा
पदेशैर्द्विविजैः सममवतीर्यसर्वसारभूतं शुक्लयजुर्वे-
दोपनिषदोरेव मुख्यत्वं व्यवस्थापयामास॥ननु शांक
रभाष्यकारैस्तावत् चतुर्वेदशाखाशिखाकाराणां सर्वो
पनिषदां साधारणमेव भाष्यमकारि तत्र शुक्लयजुर्वे
दस्योपनिषदएव मुख्यत्वं कथमिति चेत्समवधार्यताम्
,एकआसीद्यजुर्वेदस्तञ्चतुर्द्धाव्य कल्पयदित्यादिवचन
तः वेदविभागावसरे पूर्वं एकविंशतिशाखाः ऋग्वेद
स्याभूवन्॥ततोनवाधिकशतंशाखाः यजुषः सामशा-
-खाः सहस्रं अथर्वणस्य तु पञ्चाशच्छाखाः ॥ तत्रप्रति

शाखमेकैकोपनिषदेवमाहृत्य आशीत्यधिक एकादश शतसंख्याकाः उपनिषदः सम्पन्नाः ॥ एवंच तासु-साक्षाद्रामचन्द्रेणांजनेयाय सारभूतमुपनिषदामष्टोत रशतमेवोपदिष्टं ॥ स्पष्टञ्चेदम्मुक्तिकोपनिषदि ॥ तत्रापि सारवत्तरस्योपनिषदशकस्यैव भाष्यकारैर्भाष्यमकारि ॥ तच्च ईशकेन कठप्रश्नमुण्डमाण्डूक्यतित्तिरिः॥ ऐतिरेयंचछान्दोग्यबृहदारण्यकन्तथा ॥ इतिएतद्दशोपनिषदाम्मध्येपि आदिमान्तिमयोरेव शुक्लयजुर्वेदोपनिषदोर्निरतिशयसारवत्तयैव मुख्यत्वमिति वदामः ॥ कुतइतिचेत् तयोरेव शुद्धात्मविद्याप्राचूर्येण सर्वोपनिषदामन्तर्भावयोग्यत्वेन व्यापकतया च मुख्यत्वात् ॥ अपिच उपक्रमोपसंहारावभ्यासोपूर्वताफलम् अर्थवादोपपत्तिश्च लिङ्गन्तात्पर्यनिर्णयेइत्यादिवचनतोपि वेदत्वावच्छिन्नस्य ब्रह्ममात्रतात्पर्यनिर्णायकउपक्रमोपसंहारयोरैक्यरूप्यस्यावश्यकतया सन्न्यस्य श्रवणं कुर्यादिति वैधवचसासन्न्यासमुद्दिश्य अव्यवहितोत्तरमेव श्रवणविधानात् ॥ तथा चशोपनिषदादिममन्त्रेसन्न्यासमुपक्रम्य एतावदरे खल्वमृतत्वमिति होक्त्वायाज्ञवल्क्यः प्रवव्राजेत्यन्तेन बृहदारण्योपस-

थाध्यायगतमैत्रेयीब्राह्मणेनोपसंहारस्य एकरूपत्वात्॥
तदन्यासांतदभावाच्च ॥ प्रकृतवेदोपनिषदोरेवेताहश
मैकरूप्यस्य जागरूपतया भाष्यकारैस्तत्स्फुटतरम
ङ्गीकृतमित्यवधेयम् ॥ अतएवोक्तमभियुक्तैः ॥ वार्ति
कान्ताब्रह्मविद्येति ॥ तथाच बृहदारण्यवार्तिकान्तैव
ब्रह्मविद्येतिसिद्धम् ॥ अतएवोक्तं विद्यारण्यस्वामिचर
णैः शंकरदिग्विजयस्य त्रयोदशसर्गे तद्यथा ॥ अथैक
दाखिलविनेयवरःसुरेश्वरःश्रीसद्गुरुपरिसरमुपससार॥
अपरं निजकरद्वन्द्वेन· गुरुपदद्वन्द्वं विधिवदभिवादया
मास ॥ ततोऽद्वैतभाष्यभूपकं सूत्रभाष्यवार्तिकं वि
धातुं प्रवृत्तमनाः सन् श्रीसद्गुरुचरणावबीभणत् ॥
श्रीमद्विनेयगणगणितेनामुनाअधुनाय दद्वैतसरणिक
रणीयं विद्वत्स्मरणीयं रमणीयं किमपि स्वनियोगेन
विवरणीयमाचार्यचरणैरिति ॥ तल्लक्षणजनितानन्द
सांद्रगोदेशिकेन्द्रोपि अवादीत् ॥ हेनियतममामकभा
ष्यभूषकोद्वैतमतदूषकोमुमुक्षुभिक्षुतोषको वार्तिकाभि
धेयः प्रबन्धोविधेयइति ॥ ततोविश्वरूपउवाच॥हेगुरु
वर्यातिप्रसन्नतरे भवदीयातिगम्भीरभाष्यविचारे यद्य
पि मम शक्तिर्नास्ति तथापि श्रीमत्कृपाकटाक्षवीक्षित

स्तद्विधानदीक्षितोभवामीति गौरवीमाज्ञामादायनिर गात् ॥ ततस्तदसहिष्णवोवहवोभेदधियः पद्मपादाचा र्यादयः रहसिगुरुवरमूचुः ॥ अयंविश्वरूपः श्रीमद्भाष्यं भाट्टमतपक्षपातेन सर्वकर्मपरतयैवयोजयिष्यतीत्यतः श्रीमद्विनेयादिमोपद्मपादाभिधेय एवेदंभूषयत्विति॥तत्र पादाचार्योप्यवादीत् हेगुरुवर्य आनंदगिरिर्वाहस्ताम लको वाश्रीमद्भाष्यंभूषयतु॥ततोभाष्याकृदभाषे॥अंतर्नि रतोयं हस्तामलकस्तत्कर्तुं नालं॥ किंतुसुरेश्वराचार्य ए वतत्कर्तुं समर्थो नान्यस्तथापि सर्वेषां भवतामनभी ष्टं चेत्तंवारयिष्यामिइत्युक्त्वा गुरुवर्योपिसुरेश्वराचार्यं परिसरमवापवाचं चोवाच ॥ हेमनीषिन्नलं मद्भाष्यवा र्त्तिकंमाकुरु॥एतेसर्वेविनेयवराः समत्सराः संस्त्वयिक मंजडत्वमारोपयन्ति ॥ किंच त्वमेकं स्वतंत्रं निबन्धम नि रुचिरं विरचय॥येन एतेषांभवत्स्वरूपावगमोभवेत्॥ ततः सुरेश्वरोपि गौरवाज्ञयानैष्कर्म्यसिद्धि संज्ञक मपूर्वं प्रबन्धंविधायश्री सद्गुरुचरणो पायनंव्यधात्॥ गुरुवर्योपि तांदृष्ट्वापरमतिहृष्टः समभूत् ॥ सर्वांश्चद र्शयामास ॥ स्वभाष्यभूषकवार्तिकरचनाविघातजन्य खेदंज्ञानेनैवशमयत् ॥ सुरेश्वराचार्योपि पद्मपादादि

भिराचरितस्वकृतिविघ्नजन्यामर्षेणपद्मपादकृन्ग्रन्थः पृथिव्यांप्रथां तथा समाप्तिं च न गमिष्यति ॥ किंच हुतभुक् दहिष्यतीतिशशाप ॥ गुरुसन्निधावेत्र॥भाष्यकारोपि सुरेश्वरमुवाच ॥ हेविनयिन् अवयोर्यां जुषी शाखास्ति ॥ तत्रापिकृष्णामदीयाशुक्लाभवदीया ॥ अतः पूर्वंतैत्तिरीयोपनिषद्भाष्य वार्तिकंविधाय ॥ पश्चादेव बृहदारण्य भाष्यवार्तिकंविधेयमिति प्रस्फुटमाज्ञापयामास ॥ सोपिगोरवाज्ञयानिरुक्तभाष्य वार्तिकयुगंविधाय सद्गुरुचरणयोरर्पयामास ॥ एवम् पद्मपादाभिधेयोपिभाष्यटीकामकरोत् ॥ गुरुवरोपितां दृष्ट्वातदग्रहगतीं च समीक्ष्यावदत् ॥ हेवत्सभवद्ग्रन्थीयपंचपादा एव पृथांगमिष्यंति ॥ तत्रापिभावूर्येण चतुः सूत्र्येवेति॥ पुनरपिसुरेश्वराचार्यमवदत् ॥ वार्तिकेंद्रुसमंभवद्वार्तिकं तु आसूर्यचंद्रपर्यंतंपृथिव्यांप्रथांगमिष्यति ॥ अपिच प्रारब्धकर्मावशेषेणभुविवाचस्पतिमिश्राभिधांभवानभूत्वासमवतीर्यस्वतंत्रांमद्भाष्यभूमिकांटिकविधास्यसि ॥ सापिआप्रलयंजगतिजीयादिति॥ आहो स्वित्कलौ ब्रह्मविद्यापिभवद्बृहदारण्य वार्तिकांतेवभविष्यतीति वरपूरणेन गुरुवरः सुरेश्वरंपरमतितो

पयामास॥इत्यादि॥ एवं चाखिलश्रुति शिखामुखीभूता
नामपि सर्वोपनिषदांमध्येबृहदारण्यस्यैवशिरस्त्वेन मु
ख्यतयाकृष्णयाजुषैरपिशांकरभाष्यकारैर्निरमिमानिक
तयाशुक्लयजुर्वेदीयईशादिबृहदारण्यांतैवव्यापिकेयंब्र
ह्म विद्यासमष्टिर्व्यवस्थापितेतिसिद्धम् ॥ अतएवोच्य
ते पद्यं॥ईशोत्पादित पादपद्मयुगुलाकेनोरुकाया कठ
श्रुत्यावद्धकटिर्द्वयथर्वहृदयामाण्डुक्यमुन्डस्तनि ॥ तैत्ति
र्युद्भवदेतिरैयविलसद्धस्तद्वयानमुखं छान्दोग्यंमहितम्
शिरस्तु बृहदारण्यमत्र पुण्यम् विदुः ॥ १ ॥ सैषा
चोपनिषत्समष्टि रुदितात्रब्रह्मविद्यापरासिद्धैर्व्यासक
सूत्र पुत्रमुदिनागितासुताभिःस्तुता ॥ श्रीमच्छांकर
भाष्यकारभगवत्पादैर्व्यवस्थापिता मिथ्याज्ञानविरोधि
नीविजयते मुक्ताश्रितामुक्तिदा ॥ २ ॥ ननुउपनिषच्छ
ब्दस्यविद्यावाचकतया कथंग्रथवाचकत्वमिति चेदुच्य
ते ॥ उपनिषदित्यत्र उपनि इति उपसर्गोतरंशदॢवि
शरणगत्यवसादनेष्वित्यनुशासनेन शद्ॢधातोर्विश
रणाद्यर्थवाचकत्वात् ॥ प्रकृतेदेहाभिमानादिदुःखानि
निश्चयेन उपनिषीदयतिविसारयतिशिथिलयति तथा
ब्रह्मप्रत्यगात्मत्वेन निनरांगमयति ॥ किं च सर्वानर्थ

मूलभूतामविद्याम त्यंतमवसादयति उन्मूलयति ॥ इत्युपनिषद्ब्रह्मविद्या ॥ तयाचोपनिषच्छब्दः प्रतिपादकतासंबंधेत तादृशग्रन्थवाचकः ॥ प्रतिपाद्यतासंबंधेन ब्रह्मविद्यावाचकः ॥ एवं च संबंधभेदेपिधात्वर्थसाम्यात् तस्यसंबंधभेदाभिप्रायेणब्रह्मविद्यापरत्वेपि नक्षतिरित्यवधेयम् ॥ अत्र यद्यप्यनवद्यानाद्यब्रह्मविद्या पादाद्यं गतेनोपन्यस्तानांसमस्तानामीशादिबृहदारण्यान्तानामुपनिषदां अवयवत्वेन समानत्वेपि सर्वेषुगात्रेषु शिरःप्रधानमित्यादिवचनतोप्यस्ति कश्चिद्वस्ता दिसमस्तापेक्षयामस्ते अवयवातिशयस्तेनापि बृहदारण्यस्यैवशिरस्त्वेन व्यष्टोयथामुख्यत्वं प्रतियते ॥ एवं समष्टावपि एकआसिद्यजुर्वेदस्तं च तु धौव्यकल्पयदित्यादि प्रमाणगणाभरणस्यागण्यपुण्य जनकस्यबृहदारण्यस्यैव निरपक्षकमुख्यत्वं शांकरभाष्यकारानुमत मितिनिश्चीयते ॥ तस्मादभिनवशिवावताराणां शांकरभाष्यकाराणां भगवत्पूज्यपादश्रीमदाचार्यचरणानामीशादिबृहदारण्यांतो ब्रह्मविद्यारूपः शुक्लयजुर्वेद एव निरतिशय ब्रह्मप्रतिपादकतयामुख्यो नान्य इति परमाकूतमतिजागरूकतयेवाविर्भूतमितिसि

द्दम् ॥ एतावताप्रकृतवेदस्योक्तरीत्याकांडत्रयेयथामु
ख्यत्वमेवं प्रस्थानत्रयेपितस्यैव मुख्यत्वमित्युच्यते ॥
अत एव वेदान्तसूत्रकारैः साक्षान्नारायणस्यज्ञानकल
याअवतीर्णैर्बादरायणैरपि निरुक्तव्यापकताधिकरणस्य
बृहदारण्यस्यैवादिमसूत्रेणवक्ष्यमाणाधिकरणगणापेक्ष
यामुख्यत्वमभाणि ॥ यमधिकृत्यैवजन्माद्यस्याद्यधिक
रणानिसर्वाण्यनवद्यब्रह्मविद्यासाधनतया शुद्धब्रह्मवि
चारपराणिभवेयुः । येन चातिप्रांचविरंच्यादिपंचीकृता
पंचीकृत भूतपंचकप्रपंचेद्वैतमतवंचकोऽद्वैतप्रपंचः अति
विकचमिहिरमरीचिनिचयेवत्सुस्फीतः स्फुरिति ॥ पुर
स्तादपिउपनिषद्भाष्यकृत्सम्मतं यथा तन्मुख्यत्वमवो
चाम ॥ तथेदानीमपि स्थूणानिखनन्यायेन प्रकृतव
जलेपीभावानुभवाय सूत्रकारसंमतं तस्यैवादिमाधिक
रणेमुख्यत्वं सम्यक् प्रतिपादयामः ॥ तत्रादौ अधिकर
णनाम वक्ष्यमाणपंचवयवघटितसमुदायत्वं । तच्च पंच
विधं यथा विषयोविशयश्चैवपूर्वं पक्षस्तथोत्तरम् ॥ सं
गति श्चेतिपंचांगंप्राचोधिकरणंविदुः ॥ वेदांतस्याधिर
णंद्विनवत्युत्तरंशतम् ॥ सूत्राणिपंचपञ्चाशदुत्तरं शत
पंचकम् ॥ सूत्रलक्षणं तु ॥ अल्पाक्षरमसंदिग्धं सारव

द्विश्वतोमुखं ॥ अस्तोभमनवद्यं च सूत्रं सूत्रविदोविदु रिति ॥ तथा भाष्यलक्षणमपि॥ सूत्रार्थोवर्ण्यते यत्रवा क्यैः सूत्रानुसारिभिः ॥ स्वपदानि च वर्ण्यंतेभाष्यंभाष्य विदोविदुरिति ॥ एवं चोक्तलक्षणलक्षितमादिमाधिकर णन्तु अथातोब्रह्मजिज्ञासेति॥ अत्राथशब्दः मंगलानंत रारंभेति वचसाआरंभवाचक एव यदिउच्येत ॥ तर्हि ब्रह्मजिज्ञासारंभ इत्यनर्थएव पर्यवस्यति ॥ न हि अस्य धिकरणं ब्रह्मजिज्ञासाक्रीयते ॥ किं तु तयाब्रह्मविचा रएवक्रीयते ॥ किं चाथयोगानुशासनमिति सूत्रीयाथ शब्दवन्मंगलवाचकत्वमपि वक्तुमशक्यम् ॥ तस्य वीणापणवादिश्रवणवन्मङ्गलफलकस्वरूपत्वात् ॥ अतः अथातोधर्मजिज्ञासेति सूत्रनियंत्रिताथशब्दवदानंतर्य वाचकत्वमेव वक्तुमयुक्तम् ॥ तत्रापिपूर्वतन्त्रीयाधि रणसहस्रं न हि ब्रह्मजिसांप्रतिपूर्ववृत्तितयाकारणम् ॥ तस्य धर्ममात्रनिर्णायकत्वात् ॥ एवं कर्मनिर्णयोपि न कारणं तस्यानुष्ठान हेतुत्वात् ॥ अर्थी समर्थोविद्वान्य जेतेतिश्रुत्याअर्थादीनामविकारविशेषणत्वाच्च ॥ न ग्विद्वत्स्वाध्यायाध्ययनानंतर्यसाम्ये न कर्मावबोधानंत र्यं मथशब्दार्थ इतिचेन्न ॥ धर्मजिज्ञासायाः प्रागपि

आधीतवेदांतस्य ब्रह्मजिज्ञासोपपत्तेरिति भाष्यकारै रेवोक्तत्वात् ॥ अतः कर्माणितदवबोधस्तन्यायविचारो वानकारणं अतः न ब्रह्मजिज्ञासायाः धर्मजिज्ञासानंतर्यमिति ॥ किं च जिज्ञास्यभेदोप्यस्ति ॥ तथाहि धर्मःजिज्ञास्यः सचभव्यः अत्र ब्रह्मजिज्ञास्यंतच्च नित्यनिवृत्तम् अपिचधर्मफलंसाध्यम्पुरुषव्यापारंतत्रत्वात् ॥ जिज्ञास्यं ब्रह्मतुनित्यनिवृत्तत्वात् न पुरुषव्यापारतंत्रं ॥ चोदनाप्रवृत्तिभेदाच्च यथास्वर्गकामोयजेतेति चोदनावाक्यं यागादौपुरुषंप्रवर्तयदेवावबोधयति॥ अयमात्माब्रह्मेत्यादिवाक्यं तुत्वमर्थंकेवलमप्रपंचब्रह्मबोधयति ॥ न तत्र प्रवर्तयति ॥ यथेन्द्रियसंन्निकृष्टे अर्थेऽवबुध्यमानेन प्रवृत्त्यपेक्षातद्वत् ॥ तथा च प्रवृत्तमानमेयो धर्मःउदासीनमानमेयं ब्रह्मेतिजिज्ञास्यभेदः ॥ अत एव यथाभूत ब्रह्मात्मविषयमपिज्ञानं न चोदनातंत्रं ॥ तद्विषयेलिङ्गादयः श्रूयमाणा अपिच नियोज्यविषयत्वात्कुंठीभवंति ॥ उपलादिषु प्रयुक्तक्षुरतैक्ष्ण्यादिवत् अहेयानुपादेय वस्तुविषयत्वादिति समन्वयसूत्रेभाष्यकारोक्तत्वात् ॥ तस्माद्धर्मजिज्ञासासमभिव्याहृताथशब्दवाच्यवेदाध्ययनानंतर्यवाचकत्वं ब्र

ह्मजिज्ञासापूर्वोपस्थितायं शब्दस्यवक्तुमशक्यं ॥
किंतु भाष्यकृद्दर्शितयथोक्तसाधनचतुष्टयसंपत्त्यानंत
र्यार्थकत्वमेव वक्तव्यम् ॥ साधनसंपत्तीर्यथोक्तत्वं
तु ॥ नित्यानित्यवस्तुविवेकः ॥ इहामुत्रफलभोगवि
रागः शमदमादिषट्कसंपत्तिः ॥ मुमुक्षुत्वंचेति ॥
इदं चतुष्टयमप्यागमगम्यं कथमितिचेदुच्यते ।
तद्यथेहकर्मचितोलोकःक्षीयते ॥ एवमेवामुत्रपुण्यचि
तोलोकः क्षीयतेति श्रुत्या ॥ यत्कृतकंतदनित्य
मिति न्यायवत्या ॥ नजायतेम्रीयते वा विपश्चि
न्नोत्रैमुमातदमृतमतोन्यदार्तं इत्यादिश्रुत्याच । भूमा
आत्मानित्यः ॥ ततोन्यदनित्यमिति विवेकोलभ्य
ते ॥ परीक्ष्यलोकान् कर्मचितान् ब्राह्मणोनिर्वेदमाया
न्नास्त्यकृतः कृतेन ॥ आत्मनस्तु कामायसर्वं प्रियम्भ
वति ॥ इत्यनयाश्रुत्या ॥ इहामुत्रफलभोगे अनात्मना
त्रैदेहेन्द्रियाद्यखिलपदार्थजातेच विरागवत्त्वमोपि
सुलभएव ॥ शान्तोदान्तोउपरतस्तितिक्षुः ॥ श्रद्धावि-
त्तोभूत्वा आत्मन्येवात्मानं पश्येदित्यनयाश्रुत्या शमा
दिषट्कमपि प्रस्फुटं संघटते ॥ तत्र शमोनामश्रवणा
दिव्यतिरिक्तविषयेभ्यो मनोनिग्रहः ॥ दमोनामतद्व्यति

रिक्तविषयेभ्यः बाह्यविषयेन्द्रियाणां निवर्त्तनम् ॥ तद्य
तिरिक्तविषयेभ्युपरमणमुपरतिः ॥ विहितानां कर्मणां
विधिनापरित्यागेवातितिक्षा ॥ शीतोष्णादिद्वन्द्वसहि
ष्णुता ॥ उतनिग्रहीतस्यमनसः श्रवणादौ तदनुगुण
विषयेचसा ॥ गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा ॥
समाधिस्तु ॥ निग्रहीतस्यापिमनसः स्थिरीभावः ॥ मु
मुक्षातु ॥ नसपुनरावर्त्ततेति श्रुतिप्रसिद्धो मोक्षस्तदि
क्षा ॥ एवंभूतः प्रमाताअधिकारि ॥ तल्लक्षणन्तु ॥ वि
धिवधीतवेदवेदांगत्वेनापाततोऽधिगताखिलवेदार्थो अ
स्मिन् जन्मनिजन्मान्तरेवाकाम्यनिषिद्धवर्जनपुरः सरं
नित्यनैमित्तिकप्रायश्चित्तानुष्टानेन निर्गतनिखिलकल्म
षतया नितान्तनिर्मलस्वान्तः साधनचतुष्टयसम्पन्न
प्रमातेति ॥ अत्र विकादोनामुत्तरोत्तरहेतुत्रेनाधिका-
रिविशेषणत्वमभ्युपगन्तव्यम् ॥ अतएव एतेषु सत्सु
प्रागपि धर्मजिज्ञासायाः ऊर्ध्वेञ्चशक्यते ब्रह्मजिज्ञा
सितुं ज्ञातुं च ॥ नविपर्यये ॥ तस्माद्यथोक्तसाधनस
म्पत्यानन्तर्यमेवाथशब्दार्थः इतिफलितम् ॥ एवमथ-
शब्दसमभिव्याहृतो-तशब्दोपि धर्मजिज्ञासाव्यवहि
तपूर्ववृत्तिवेदाध्ययननिष्टहेत्वर्थवाचकोऽतः शब्दसमा

नार्थक्योनभवति ॥ किन्तु विपक्षपक्षीयाक्षेपसंक्षयलक्षण
एव ॥ तथाहि अक्षय्यंहवैचातुर्मस्ययाजिनः सुकृतं भ-
वतीत्यनयाश्रुत्या कर्मफलस्य नित्यत्वेन ततो वैराग्या
सिद्धेः ॥ ब्रह्मापेक्षयाजीवत्वे न जीवस्यभेदात् ॥ तदभे
दरूपमोक्षोपिलोष्ठकाष्ठादिवदसिद्धइत्याक्षेपपरिहारार्थ
कएव अतः शब्दः ॥ तथाच तद्यथेहकर्मचितोलोकः
क्षीयते इत्यादिश्रुत्या अक्षय्यश्रुतिवाधात् ॥ किञ्चब्र-
ह्मविदाप्नोतिपरमित्यादिश्रुत्या ब्रह्मज्ञानवतः साक्षान्
मोक्षदर्शनाद्धेतोरित्यर्थ एवसः ॥ किञ्च ब्रह्मपदसमभि
व्याहृतजिज्ञासेइत्यत्र कर्तव्यपदस्याध्याहार्यत्वेन तादृ
शकृतिसाध्यत्वं जिज्ञासायां वाधितमतः प्रकृतिप्रत्यय
योर्लाक्षणिकत्वं वक्तव्यम् ॥ तत्र प्रकृतिभूतं ज्ञानं अ
जहत्स्वार्थलक्षणया महावाक्यजन्यवृत्तिप्रतिफलित
चैतन्यरूपफलीभूतज्ञानपरं वक्तव्यम् ॥ जहल्लक्षण
याप्रत्ययार्थीभूतेच्छासाध्यविचारलक्ष्यकः सन्प्रत्ययः।
एवञ्चोक्तागमावगम्यमान विवेकादिसाधन चतुष्टयस
म्पत्तिसत्वाद्धेतोस्तादृशसाधनसम्पत्यनन्तरं तद्विशिष्ट
शिष्टेनाधिकारिणाब्रह्मज्ञानाय वेदान्तविचारः कर्तव्य
इतियथाश्रुतः सौत्रोऽर्थःसम्पन्नः ॥ इतोप्य धिकस्तुशा

रीरकभाष्ये एवानुसन्धेयः ॥ तथाचेतादृशादिमाधिक-
रणस्य विषयवाक्यन्तु ॥ आत्मावा अरेद्रष्टव्यः श्रोत
व्योमन्तव्योनिदिध्यासितव्यइति ॥ अत्र श्रवणादिक-
मन्तराआत्मदर्शनं नभवतीति ॥ श्रोतव्योद्रष्टव्यइति
वक्तव्ये ॥ कथन्द्रष्टव्यः श्रोतव्यइतिकेचन शंकामंकु-
रीयन्ति ॥ तेतावदित्थम्प्रत्याख्यातव्याः ॥ इयं श्रुति
स्तवर्थक्रमानुसारिणि नपाठकानुसारिणि इति ॥ अर्थ
क्रमस्य पाठक्रमापेक्षयाप्रबललत्वात् ॥ यथा अग्निहोत्रं
जुहोति यवागूंपचतीत्यत्रहोमप्रयोजनक एव यवा
ग्वाः पाकः प्रयोजनवशेनपूर्वमनुष्ठीयतेति नकोपि
शंकापंककलंकावकाशः ॥ पुनरत्रयथाप्रयाजादयोसकृ
दनुष्ठिता एव कथंभावाधाकांक्षापूरकतयाअंग्युपकारक
तामापादयंति एवं सकृद्विहिताएव श्रवणादयोपिअं
ग्युपकारकतामापादयेयुरित्यपरेसंगिरंते । तदप्यसमंज
समेव ॥ आत्मदर्शनपर्यवसानानिश्रवणादीनि ॥ आ
त्मदर्शन पर्यंतं असकृदावर्त्यमानान्येवदृष्टार्थसमर्था
निभवंति ॥ यथाव्रीहिन् वहन्यादितिवाक्यावगतानिस
कृदवहननादीनिनिस्तुषतंडुलनिष्पत्ति पर्यवसानानित
द्वत् ॥ अत एवा वृत्यधिकरणे शारीरकतुरीयाध्यायाद्य

पादोप आवृत्तिरसकृदुपदेशादित्यादिमसूत्रे भाष्यकारै रपि तस्मात्सकृदुपदेशेप्यावृत्तिसिद्धिरसकृदुपदेशस्त्वावृ त्ति सूचक इति समाधाय ॥ पुनर्लिंगाच्चेतिद्वितीयसू त्रेण लिंगमपिप्रत्ययावृत्तिं प्रत्यापयतीतिप्रतिपाद्य ॥ मंदामंदप्रज्ञयोर्मंदप्रज्ञविषये असकृदावृत्तिरुदाहृता ॥ तथाहिछांदोग्येतत्वमसिश्वेतकेतो इत्युपदिश्यभूय एव माभगवन् विज्ञापयत्विति पुनः पुनः परिचोद्यमान स्तत्तदाशंकाकारणंनिराकृत्यतत्वमसीत्यवासकृदुपदिश ति ॥ तथैवप्रकृते श्रोतव्योमंतव्यनिदिध्यासितव्यइ त्यादिदर्शितमिति च सिद्धांतितम् ॥ तथाचावृत्तिसिध्या एक प्रत्ययार्थ विशेष्यक एव शाब्दबोधोभवति ॥ त थाहि आत्मदर्शनसाध्यिका श्रवणकरणिकामनननिदि ध्यासनं इतिकर्तव्यकाभावनेतिमुख्यभावनाविशेष्यकये व वाक्यार्थः प्रतिफलति ॥ अत्र श्रवणं नामोपक्रमा दिषड्विधलिंगैरशेष वेदांतानांअद्वितीये वस्तुनितात्प र्यावधारणम् ॥ अयत्रार्एना दृशधारणानुकूलामानसी क्रियातदिति ॥ मननंतुश्रुतस्याद्वैतवस्तुनोवेदांतानु गुणयुक्तिभिरनवरतमनुचिंतनम् ॥ शब्दावधारितेऽ र्थे मानांतरविरोधशंकायांतन्निराकरणानुकूलतर्कात्म

कज्ञानजनकोमानसव्यापारोशातत् ॥ विजातीयदेहादि प्रत्ययरहिताद्वितीयवस्तु निततदाकाराकारितायाः वृत्तेः सजातीयप्रवाहोनिदिध्यासनम् ॥ अयत्राअनादिदुर्वासनया विषयेष्वाकृष्यमाणस्यमानसस्य विषयेभ्योऽपकृष्यात्मविषयकस्थैर्यानुकूलोमानसव्यापरस्तत् ॥ येते षुत्रितयेष्वपिचरमंनिदिध्यासनमात्मसाक्षात्कारेसाक्षात्कारणं ॥ ते ध्यानयोगानुगताअपश्यन् ॥ देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिश्रुतेः ॥ तादृशनिदिध्यासनेचमननंहेतुः ॥ अकृतमननस्यार्थदार्ढ्याभावेन तद्विषयकनिदिध्यासनायोगात् ॥ तादृशमननेच श्रवणं हेतुः ॥ श्रवणाभावेतात्पर्यानिश्चयेन शङ्कानुदयात् ॥ श्रुतार्थविषयकेयुक्त्ययुक्तत्व निश्चयानुकूलमननायोगाच्च ॥ एवंचोक्तरीत्या एतानित्रीण्यपिज्ञानोत्पत्तौ कारणानि इति पूर्वाचार्याः समूचिरे ॥ अपूर्वाचार्यास्तु श्रवणमेवप्रधानं श्रवणमनुजायमानयोर्मनननिदिध्यासनयोः श्रवणफलात्मदर्शननिर्वर्तकत्वेनारादुपकारकतया अंगत्वमित्याहुः ॥ यथाच घटादिकार्येमृत्पिण्डादीनां प्रधानकारणताचक्रादीनामवान्तरकारणतेति प्राधान्याप्राधान्यव्यपदेशः ॥ तथाश्रवणमनननिदिध्यासना

नामपीति ॥ तथाचैतेषां श्रवणादीनां आत्मदर्शनं मु
ख्यम्फलम् ॥ अवान्तरन्तु अप्रतिपत्तिविप्रतिपत्तिरन्य
थाप्रतिपत्तिनांनिवृत्तिरितिवदामः ॥ तत्राप्रतिपत्तिर्नाम
नाहंब्रह्मअपितुसंसारीजीवविशेषः इत्याज्ञानंइदमेवासं
भावनेतिव्यपदिश्यते ॥ अहं ब्रह्मवानवेति संशयभाव
नैव विप्रतिपत्तिः ॥ अन्यथा प्रतिपत्तिस्तुदेहादावात्मा
ध्यारुः ॥ इयमेव विपरीतभावनेति व्यपदिश्यते ॥ इ
तिभावनात्रयनिवर्तकं श्रवणादिकं श्रौतं यथाक्रमं वे
दान्तविदानुमतमिति तेषामेवैषाअवान्तरफलोपलब्धि
रिति ॥ एवञ्च श्रोतव्यइत्यत्रतव्यप्रत्ययार्थीभूतायाः
भावनायाः प्रकृत्यर्थोविचारो विषयः विचारस्य वेदा-
न्ताःविषयाः आत्माद्रष्टव्यइत्यत्र आद्वैतात्मदर्शनमु-
द्दिश्यश्रोतव्यइति विचारविधानात् ॥ नहि विचारःसा
क्षाद्दर्शनहेतुरप्रमाणत्वात् ॥ अपितु प्रमाणविषयत्वात्
प्रमाणंचाद्वैतात्मनिवेदान्ताएव ॥ तन्त्वौपनिषदंपुरुषं
पृच्छामि ॥ वेदान्तविज्ञानसुनिश्चितार्थाः इतिश्रुतेः॥
वेदान्तानांतु प्रत्यक् ब्रह्मैक्यंविषयः ॥ तत्त्वमसिअहंब्र
ह्मास्मीतिश्रुतेः ॥ एवंविचारविधेः फलमपि ज्ञानद्वारा
मुक्तिः ॥ तरतिशोकमात्मवित् ब्रह्मविद्ब्रह्मैव भवती

ति श्रुतेः ॥ तथासम्बन्धोपि ॥ अधिकारिणाविचारस्य कर्तव्यतारूपः ॥ फलस्यप्राप्यतारूपश्चेतिबोध्यम् ॥ एवंचत्वारोप्यनुबन्धाः सुबोधाएव ॥ तथाचोक्तागमाव गम्यमानामधिकार्यादीनां निर्णयार्थसमर्थकमिदमादि मंसूत्रमतिरुचिरतयाजयति ॥ अतएव प्रकृतसरणि विरुद्धसरणिशरणानांमते श्रवणविध्यनङ्गीकारेण श्रव णविध्यधिकार्यादिनिर्णयकमिदमादिमं सूत्रवैयर्थ्यमा पद्येतेत्यवधेयम् ॥ एवञ्चोक्तश्रवणागमाभरणादिमा धिकरणविजातीयाधिकरणगणानेकस्तवकरुचिरः पुन रौपनिषत्पुरुष त्रिशिपभूपकाशौपनिषन्मणिगणाधिक रणस्तथा गणितसौत्रगणरमणीयः कमनीयविचित्रसूत्र नियन्त्रितः मुमुक्षुभिक्षुहृदयाल्हादचतुरः शांकरभाष्य कारविरचितोयं समन्वयाविरोधसाधनफलाभिधेचतुरा ध्यायाकारोमुक्ताहारः जीवन्मुक्ताभिमतः परमतिजाग रूकतयावरीवर्तितराम् ॥ तथाचादिमाधिकरणस्यैव मुख्यत्वेन द्रष्टव्यः श्रोतव्येतिबृहदारण्यीयश्रुतिसमा नाकारकतया सर्वोपनिषद्व्यापकबृहदारण्यपूर्वकएव सूत्रभागः सूत्रितः सूत्रकारैर्व्यवस्थापितश्च भाष्यकारै रिति सिद्धम् ॥ अतएव शांकरभाष्यं व्याकुर्वाणैरामा

नन्दचरणैरत्र श्रवणसमानार्थज्ञापकत्वेनैव्येतिपदमध्या हृतंव्यमध्याहृतञ्च भाष्यकृतेतिस्पष्टमुपदिष्टम् ॥ एव मेव भगवद्गीतायाश्चतुर्थाध्यायेप्रथमश्लोकभाष्ये ॥ इमं विवस्वतेयोगम्प्रोक्तवानहमव्ययमित्यत्र ॥ इमं अध्यायद्वयेन प्रोक्तंयोगंविवस्वते सूर्यायप्रोक्तवानहम व्ययमिति ॥ एवंद्वितीयश्लोकभाष्ये ॥ एवंक्षत्रियपर म्परयाप्राप्तमिमं योगंराजर्षयोविदुरित्यन्वयं दर्शयि त्वा ॥ सयोगः इह जीवलोके महतादीर्घकालेन नष्ट इत्युक्तवान् ॥ क्षत्रियपरम्परयाप्राप्तत्वेन नष्टइत्यर्था स्स्पष्टोभवति ॥ अपिचरहस्यमेतदुत्तममित्यत्र रहस्य शब्दः बृहदारण्योपनिषद्वोधकः ॥ तथाच स एवायंम यातेद्ययोगः प्रोक्तः सनातनः ॥ इत्यत्र ॥ साक्षान्नाराय णेनैव स एवायमित्यनेन सूर्यायोक्तोबृहदारण्यान्तोशु क्लयजुर्भागएव गीताशास्त्ररूपेण सांख्यज्ञानयोगा त्मकोयोगः प्रकर्षेण उक्तः॥ अनेनापिशुक्लयजुषएव गीताशास्त्रमूलत्वमभिहितं भवति ॥ सूर्यमुद्दिश्यभगव त्कर्तृकस्योपदेशान्तरस्याप्रसिद्धेः॥ एवञ्चेतावताप्रब न्धेन वेदस्यकांडत्रये मुख्यत्ववत् प्रस्थानत्रयेपि शुक् लयजुर्वेदस्यैव मुख्यतरत्वं सिद्धान्तितम् ॥ इतःपरन्तु

स्थूणानिखननन्यायेन तत्वमस्यादिचतुर्वेदमहावाक्ये ष्वपि प्रकृतस्यैव चरमम्मुख्यतमत्वं प्रचलितांशान्त पर्यंतं सम्यक् प्रतिपादयामः ॥ अथ आत्मावाअरेद्रष्ट व्यश्रोतव्यइत्यागमेन विहितश्रवणादिसाधनेनात्मद र्शनमेवेहेश्यत्वेन फलतयाअभिहितम् ॥ तद्धितत्वम स्यादिमहावाक्यजन्याखण्डार्थावबोधरूपं मिथ्याभूतद्वै तभ्रमग्रामशामकं निर्विकल्पकमद्वैतप्रत्यक्षम् ॥ इदमे वानायविद्योवमर्दकतयासाक्षात्सच्चिदानन्दानु भवार्थं समर्थं नेनेव ब्रह्मविद्येति वेदान्तविदांव्यवहारः ॥ स- म्यक् ज्ञानेत्यादिभिरपि जागरूकतयाव्रीयर्तितराम् ॥ यथाविस्मृतिनिजकरचामीकरोनरवरः कदाचित् दैवव शात्परमाप्तवरेण सदुक्तिनिबोधितः सन् निजकरगतं चामीकरमनुभवति ॥ तथा सदासिद्धमेवाद्वैतं वस्तुप्र स्तुत्यैव सर्वोपनिषदः सन्नद्धाः ॥ साक्षात्परम्परयात द्वैकप्रतिपादनपराः ॥ प्रारब्धोपलब्धगुरुवरमुखोदीरि तायदिभवेयुस्तर्हि तज्जन्यानुभवरूपं मुमुक्षुव्यपेक्षं निर पेक्षमपि मोक्षफलंकरामलकवत्सुलभंभवतीति ॥ ब्रह्मवि दाप्नोतिपरम् । ब्रह्मविद्ब्रह्मैव भवतीत्याद्यागमैरवगम्य ते ॥ तत्रापि परापरब्रह्मप्रतिपादनपराण्यन्यान्यपि विधि

च्छायापन्नानि वाक्यानि साक्षात्परम्परयाब्रह्मप्रतिपा,
दकान्यनेकानिसन्ति ॥ परञ्च तेष्वपि तत्वमस्यादीना
मेव चतुर्णां साक्षाद्ब्रह्मावबोधकतया महावाक्यत्वेन
व्यवहारः ॥ अतएवाद्वैतदीक्षायां योगपट्टावसरेप्रचुरत
या एतेषामेवोपदेशदर्शनात् ॥ तथाच तत्वमसीत्यत्र
तस्त्वमित्यंशस्य प्रातिलोम्येनत्वं तदसीत्युत्तयाप्यभेद
एवावभासते ॥ यथा लौकिकवाक्येषु क्वचिदनुपूर्वीभे
देनार्थभेदएवदरीदृश्यते ॥ तद्यथाकालिमानीलिमेत्या
दौ मालिकामालिनीति ॥ क्वचित्तु न तथाचिरं विरञ्चि
र्नेचिरं विरञ्चिरिति ॥ काशिका ॥ कालिका ॥ गयाग,
यागेति ॥ सरसेत्यादिवदवसेयम् ॥ अथछान्दोग्योपनि
षदि ॥ श्वेतकेतुर्हारुणेय आसतꣳहपि तोवाचश्वेतके
तोवसब्रह्मचर्यंन्नवैसोम्यास्मत्कुलीनोननूच्यब्रह्मबन्धु
रिव भवतीति ॥ सहद्वादशवर्षमुपेत्यचतुर्विंशतिवर्षः
सर्वान्वेदानधीत्यमहामनाअनूचानमानीस्तब्धएयाय॥
तꣳपितोवाच ॥ श्वेतकेतोयन्नुसोम्येदं महामनाअनू
चानमानीस्तब्धोस्युततमादेशमप्राक्ष्यो येनाश्रुतꣳश्रुतं
भवत्यमतंमतमविज्ञातं विज्ञातमिति ॥ पुत्रः ॥ कथन्नु
भगवः सआदेशोभवतीति ॥ पिता ॥ यथाएकेन मृत्

पिण्डेन सर्वं मृन्मयं विज्ञातं स्याद्वाचारं भणम्विकारो नामधयं मृत्तिकेत्येवसत्यम् ॥ यथा सोम्यैकेन लोहम णिनासर्वं लोहमयं विज्ञातमित्यद्युक्त्वा पुनः सदेवसो म्येदमग्रआसीदेकमेवाद्वितीयं ब्रह्मेत्याद्युपदिश्य ॥ पु नस्तप्तपरशुपर्यन्तं दृष्टान्तीकृत्य॥ ऐतदात्म्यमिदंसर्वं तत्सत्यं स आत्मातत्त्वमसीश्वेतकेतोरित्यन्तं नववारं श्वेतकेतुं प्रत्युद्दालकेनोपदिष्टम् ॥ ननु नववारमेवोपदि ष्टंन्यूनाधिकं कुतोनेति चेदुच्यते ॥ मन्दमतिबुद्धियेति चेन्न ॥ श्वेतकेतोः कुशाग्रबुद्धित्वात्तदप्रसिद्धेः ॥ अस्म दादीन्बुद्धयेत्यपि वक्तुमशक्यम् ॥ अस्मदादीन्प्रतिन वसहस्रवारमुपदिष्टंचेदपि संसारित्वान्निवृत्तेः ॥ अतः विद्वन्मतिरोचकं यद्रुचिरन्तदुच्यते ॥ अस्मिन् जगति एकमारभ्यनवांकपर्यन्तमेवांकपरिसमाप्तिर्दृश्यते ॥ न वांकस्यतुपुनरेकांकावयवत्वमपिप्रतीयते ॥ अपिच नि र्विकारतयानवांकस्य ब्रह्मरूपताप्यनुभूयते ॥ तथाहि नववारं गुणितोपि नवांकोनवत्वन्नव्यभिचरति ॥ दश वारं गुणिते सति नवति तामापन्नोपिपुनः शून्यद्वय रूपंतामापद्यते ॥ तद्वीशून्यद्वयंशुद्धं शबलमिति ब्रह्म द्वयम्भवति ॥ नकेवलमिदं यौक्तिकमेवेति ॥ किन्तु श्रु

तिरपि इदमेवावेदयति ॥ तथाहि ॥ पूर्णमदःपूर्णमिदंपू
र्णात्पूर्णमुदच्यते ॥ पूर्णस्यपूर्णमादायपूर्णमेवावशिष्य
तेइति॥अस्यव्याख्यानं॥ पूर्णमितियद्देशतः कालतोव
स्तुतश्चपरिच्छेदविरलंतत्पूर्णम् ॥ अद इतिपरोक्षाभि
धायीसर्वनाम ॥ निरुपाधिकत्वात्तदेवशुद्धंपूर्णं ॥ यदि
दंपदवाच्यंव्यवहारापन्नं तदपिपूर्णंशबलात्मनाऽऽत्मा
रूपत्वात् ॥ यददःपदवाच्यंकारणभावापन्नंपूर्णंब्रह्म तदेवे
दंपदवाच्यं ॥ कार्यंव्याप्यवच्छिन्नमिवभाति ॥ वस्तु
तः कार्यकारणकल्पनाविरलमित्यर्थः ॥ यदेवेहतदेवा
मुत्रेतिश्रुतेः ॥ इदंशब्दगोचरइं तत्रपंचाधिकरणत्वे
न पूर्णात्प्रपंचापवादाधिकरणतया पूर्णं ब्रह्मोदच्य
तेऽतिरिच्यते ॥ अतिरिच्यतेत्यर्थः ॥ एवंकार्यकारणात्म
नः पूर्णस्यवस्तुनः व्यष्टिसमष्टिस्वाविद्योपाधिसापेक्षका
र्यकारणकल्पनाविरलं ॥अहंब्रह्मास्मीतितथाविधंपूर्णमा
दायविदित्वातद्वेदनसमकालंस्वातिरिक्तकार्यकारण कल्प
नानास्तीतिभ्रमापह्नवमितिसिद्धमुपयपिएकमेवेतिश्रु
तिप्रतिपादितमेकमेवतत् ॥ तथापितादृशमायासाहाय्य
तयाऽद्वितीयंभिवसंभूत ॥ पुनस्तस्यैवतद्गुणवत्तया
त्रिविधमपि त्रिवत्कारणवत् त्रिरात्त सदैव न वदामा

पन्नम्॥तादृशत्रिकारविधुरनवांकस्यदशषाण्गुणनोपल, ब्धशून्यं द्वयस्यतत्वमस्यादिमहावाक्य विचारेण एकमे व पूर्णमव शिष्यते तदेवशुद्धंब्रह्म॥सदेवसोम्येदमग्रआ सीदेकमेवाद्वितीयं ब्रह्मनेहनानास्तिकिंचनेत्याद्युपनिषद्घ द्घोषितत्वात्॥ द्वितीयस्य स्वस्मिन्कल्पितत्वेन मिथ्या त्वात्॥ तादृशाद्वैतसिद्धेर्द्वैत मिथ्यात्वसिद्धिपूर्वकत्वा च्च॥ अत एवाद्वैतसिद्धिकारैर्मधुसूदनाचार्यैरपिनिज निबंधरचनारंभे इदमेवस्थिरीकृतम्॥ तथाहि॥ तत्रा द्वैतसिद्धेर्द्वैतमिथ्यात्वसिद्धि पूर्वकत्वात् द्वैतमिथ्यात्वमे व प्रथममुपपादनीयमिति॥अत्र प्रथमंतच्छब्दप्रयोगः॥ तच्छब्दस्यसर्वनामत्वात् सर्वनाम्नांबुद्धिविषयतावच्छे दकावच्छिन्नेशक्तत्वात्॥ तत्वेनेदंत्वावच्छिन्नस्यापिसा न्यात् पूर्वमत्रेति प्रयोग एव युक्त इति केचनशंकासंकु रियंति॥ तेतावदित्थंप्रत्याख्यातव्याः॥ सर्वनामत्वाव च्छिन्नस्यापि इदं शब्दस्यापूर्वपरामर्शकत्वेन तादृश पूर्वपरामर्शकस्यैव तच्छब्दस्य प्रयोगोयुक्त इति॥किंच यच्छब्देनपरामृश्यते इति चेदुच्यते॥ अद्वाधनेनमुनि, ना मधुसूदनेनसंगृह्यशास्त्र निचयंरचितातियत्नात्॥ बोधायवादिविजयायच सत्वराणामद्वैतसिद्धिरियमस्तु

मुदेवुधानां ॥ १ ॥ अस्मिन् पूर्वपद्ये ग्रंथकारेण निज नामपूर्वकं निबन्धनामप्रदर्शितं ॥ अनुबन्ध चतुष्टयं च ॥ तद्विविषय संबन्धप्रयोजनाधिकारीति ॥ तत्र वि षयस्तावदेकमेवाद्वितीयंब्रह्मेतिश्रुति जन्यः अद्वैतलोप लक्षितनिर्विकल्पकसाक्षात्कारः ॥ अयमेवाद्वैतसिद्धिपदा र्थः प्रतिपाद्यःप्रतिपादकोपि अद्वैतसिद्धिसंज्ञकोग्रंथएव॥ अत्र यद्यपिप्रतिपाद्यप्रतिपादकयोरैकेवाभिधा ॥ तथापि विषयेयोगः ग्रंथेरूढिरितिभेदः ॥ संबन्धभेदश्च ॥ तथा घाद्वैतसिद्धिसंज्ञको ग्रंथ एव तच्छब्देन परामृश्यते ॥ एवं च तत्र तस्मिन्नद्वैत संज्ञके ग्रन्थेपूर्वं तादृश द्वैते मिथ्यात्वमेव साधनीयं कुतः अद्वैतसिद्धेर्द्वैतमिथ्यात्व सिद्धिपूर्वकत्वात् ॥ तत्राद्वैतसिद्धिपदोत्तरंषष्ठ्यर्थः नि ष्ठत्वं तस्यद्वैतमिथ्यात्वसिद्धिपूर्वकत्वेस्वरूपेणान्वयः ॥ द्वैतमिथ्यात्वसिद्धि पूर्वकत्वं च ॥ मिथ्यात्वप्रकारद्वैत विशेष्यकनिश्चय निष्ठजनकतानिरूपितजन्यताश्रय त्वम् ॥ इदमद्वैतसिद्धौ अवयशक्त्यैवलभ्यते ॥ तथा द्विद्वैतमित्यत्रद्वाभ्यांनामरूपाभ्यां इतंप्राप्तंकथमिति चेत् ॥ अस्तिभातिप्रियंरूप नामचेत्यंशपंचकम् ॥ आ द्यत्रयं ब्रह्मरुपंजगद्रूपंततोद्वयमित्यादिवचनात ॥ द्वै

तपदवाच्यंवियदादिजगदेव ॥ तन्नविद्यतेयत्रेति व्यु
त्पत्तौ यत्रेतिसप्तम्यर्थः अधिकरणत्वं तस्य निरूपित
त्वसंबंधेन नञर्थेअभावे अन्वयः ॥ तस्यप्रतियोगितासं
बंधेन द्वैतपदार्थे अन्वयः ॥ एवं च यदधिकरणकस्यभा
व प्रतियोगिद्वैतमित्युक्तो ॥ वक्ष्यमाणलक्षणमेव मिथ्या
त्वंसंपद्यते ॥ तद्धिप्रतिपन्नोपाधौत्रैकालिकनिषेध प्रति
योगित्वम् ॥ तत्रोपाधौप्रतिपन्नत्वं तु भासमानत्वं
तद्धिस्वप्रकारकधीविशेष्यत्वं ॥ द्वैतप्रकारिकायाअद्वै
तविशेष्यकाधीः तद्विशेष्यत्वमद्वैतेपर्यवसितम् ॥ तथा
च तादृशाद्वैते ब्रह्मणित्रैकालिकः कालत्रयेवर्तमानः
नासीन्नास्ति न भविष्यतीति प्रतीतिसाक्षिको निषेधः
समानाधिकरण धर्मावच्छिन्न व्यधिकरणधर्मावच्छि
न्न एतदन्यतरप्रतियोगिताको अभावस्तत्प्रतियोगित्वं
वियदादिजगतिविलसतीति मिथ्यात्वसंपत्तिः ॥ एवंच
तुल्यवित्तिवेद्यतया संबंधसामान्यावच्छिन्न द्वैतत्वावच्छि
न्न प्रतियोगिताकाभाववदद्वैतमिति फलितं ॥ तस्य
सिद्धिर्नामनिश्चयः एक मेवेति श्रुतिजन्यः अद्वैतत्वोप
लक्षितनिर्विकल्पकब्रह्मविषयकसाक्षात्कारः सः एकमेवे
तिश्रुतिजन्यः कथमितिचेदुच्यते ॥ एकमेवाद्वितीयंब्रह्म

ति श्रुतौ एकएव अद्वितीयमिति ब्रह्मविशेषणीभूतपद त्रयेण विशेष्येस्वसजातीय स्वविजातीयस्वगतभेदशू न्यत्वप्रतिपादनेनस्वस्मिन्नद्वैतेताद्दशाद्वैतभेदोनास्ती तिप्रतीतिसाक्षिकःअद्वैतभेदाभावःसःअद्वैतत्वस्वरूपः॥ भेदाभावस्यस्वप्रतियोगितावच्छेदकस्वरुपत्वमिति नि यमात्॥तस्यताद्दशश्रुतिजन्यनिर्विकल्पकसाक्षात्कारेउप लक्षणविधयाभानात् ॥ एवं च ताद्दशश्रुतिजन्यः अद्वै तत्वोपलक्षितनिर्विकल्पकब्रह्मविषकसाक्षात्कारः अयमे वाद्वैतसिद्धिपदार्थः ॥ एताद्दशाद्वैतसिद्धेद्वैतमिथ्यात्व साधनंविनाअप्रसिध्या तथोक्तमद्वैतसिद्धिकारैर्मधुसूदना चार्यै रिति ॥ एवंच ताद्दशाद्वैतसिद्धिर्द्वैतमिथ्यात्वसि द्धिपूर्वकैवेतिद्दिम् ॥ ताद्दशद्वैतमिथ्यात्वे श्रौतान्यपिप्र माणानिप्रदर्श्यन्ते ॥ तथाहि अतोन्यदार्तं ॥ नतुतद्वैत मस्ति ॥ मात्रका च न भिदास्ति ॥सर्वंविकारजातंमा यामात्रं॥ प्रपंचोयदिवर्तेतनिवर्तेत न संशयः॥ मायामा त्रमिदंद्वैतमद्वैतंपरमार्थतः॥ विकल्पोविनिवर्तेतकल्पि तोयदिकेनचित्॥उपदेशादयंवादाज्ञातेद्वैतं न विद्यते॥ द्वितीयकारणाभावादनुत्पन्न मिदंजगत् ॥ द्दश्यरूपं जगद्रूपंसर्वं शशविषाणवत् ॥ वंध्याकुमारवचनाद्वैति

श्चेदस्विदंजगत् ॥ शशशृंगेण नागो म्रोमृतश्चेदस्विदंजगत् ॥ मृगतृष्णिजलंपीत्वातृप्तश्चेज्जगदस्तितु ॥ मासात्पूर्वं मृतोमर्त्योह्यागतश्चेज्जगद्भवेत् ॥ सच्चिदानंदमात्रोहमनुत्पन्नमिदंजगत् ॥ इतिसंक्षेपः ॥ एवं चलक्षणप्रमाणाभ्यामवगततादृशार्थे तद्विसमनंतरमेवार्थे तसिद्धिस्तदुत्तरमेवोक्तरीत्यासआत्मातत्त्वमसिश्वेतकेतोरित्युपदेशः ॥ तथाचैतावता तत्त्वमसीतिमहावाक्यसंगतिमभिधाय इतः परन्तद्यथाश्रुतं विविच्यते ॥ तत्रयद्यपि सुखमात्मस्वरूपतया नित्यप्राप्तमेव ॥ तथाप्यनाद्य विद्याविस्मृतनिजगलग्रैवेयकवदप्राप्तत्वभ्रमात्संसारसुखाभासायात्यायासेनानेककर्माण्याचरनत्तत्फलान्यपि सुखदुःखादीन्यनुभवन् सर्वोपिनिजदेवसचिवोजीवनिचयः दुरंतदुर्वारतरसंसारकांतारेतिचिरंभ्रमीति ॥ अतः सर्वानर्थहेतुस्वस्वरूपानवबोध इति नित्यनिरति शयस्वप्रकाशसच्चिदानंदरूपयोर्जीव ब्रह्मणोरैक्यरूपशुद्धचिन्मात्रगोचरनिर्विकल्पकसाक्षात्काद्वारातदुपमर्दायापि च कणभक्षाक्षचरणमुनिजैमिनिपतंजलिकपिलाद्यखिल इतिकुलदलनाय ॥ तत्त्वमसि ॥ अहंब्रह्मास्मीत्याद्यैतागमराजः स्वविचारपरंनर

वरं स्वस्वरुपसामग्येपरमतिजागरुकतयैवाभिषिं च सिम्म ॥ तथा हि तत्वमसीतिवाक्यंवस्यापदजन्य पदार्थोपस्थितिद्वाराखंडार्थावबोधकं भवतीत्यतस्तत्वं पदाभ्यांवाच्ययोर्लक्ष्ययो र्व्युपस्थितयोः पदार्थयोः प्रकृतवाक्यार्थानुकूलयोरन्यतोऽ सिद्धत्वात् ॥ तौवाक्यशेषेणैव प्रमातव्यौ ॥ तथा च प्रदार्थग्रहीतवृत्तिकस्य तत्पदादेशानेनतदर्थोपस्थिति द्वारावक्ष्यमाणवाक्यार्थसमर्थनं भविष्यतीत्यवधेयं ॥ यूपाहवनीयादिपदार्थवत् ॥ यथा यूपेपशुंबध्नातीतिवाक्यात् यूपेपशुबंधनसंसर्गे प्राप्तेयूपपदार्थाकांक्षायां अन्यतोप्राप्तं यूपपदार्थं यूपं क्षतीति वाक्यं यूपोतद्देशेनतक्षणादिसंस्कारविधायकम् तक्षणादिसंस्कारविशिष्टंकाष्ठंयूप इति वाक्यमर्याद याप्रमापयति ॥ एवमावहनीयेजुहोतीति वाक्येआवहनीयसंसर्गेप्राप्तेआहवनीय पदार्थाकांक्षायांअन्यतः प्राप्तमावहनीयपदार्थं वसंते ब्राह्मणोअग्नीनादधीत ॥ नक्तम् गार्हपत्यद्दिवाआवहनीयमितिवाक्यं दिवाधानादिसामग्रीविशिष्टे अग्निरावहनीय इति एवं तत्वमसि तत्वं पदोपस्थितयोर्वाच्यलक्ष्यार्थबोधकानि वाक्यानि तु ॥ यतो वाइमानिभूतानिजायंतेत्यादयः सृष्टयादिश्रुतयस्त

त्पदवाच्यबोधकाः ॥ तद्यथामहामत्स्य उभेकुलेऽनुसंच
रति पूर्वंचापरंचैवमेवायंपुरुषः एतावुभावंतानुसंचरति
स्वप्नांतंबुद्धांतं चेत्याद्यास्तुलं पदवाच्यार्थगमकाः ॥
सत्यंज्ञानमनंतंब्रह्म ॥ नित्यंविज्ञानमानंदंब्रह्मेत्या
द्यास्तुतयोर्लक्ष्यार्थ प्रतिपादकाः ॥ एवं चैतद्वाक्य
प्रमिततत्वं पदप्रतिपाद्य विशिष्टशुद्धवाच्यलक्ष्यार्थम्र
हीत वृत्तिकतत्पदादिजन्य ततत्पदार्थोपस्थितिद्वाराख
ण्डैताखंडार्थावबोधजननयोग्येतत्त्वमसीतिवाक्ये अवां
तरवाक्यानुभूतयोः शुद्धजीवब्रह्मणोः मुख्यार्थान्वयानु
पपत्त्यालक्षणा वृत्यानिर्विकल्पकस्मरणो पपत्तिरित्युच्य
ते ॥ यथासकलकरण ग्रामग्रामक सुषुप्त्यवस्थायां
साक्षिचैतन्यविषयको अनुभवः अविद्यापरिणाम एव ॥
सुखमहमस्वाप्समिति स्मरणान्यथानुपपत्त्या विवरणा
चार्यांगीकृतस्तद्वत् ॥ तत्र यदिप्राक्कालीनस्ताहक्प्रत्य
यो न स्मृतिः किं त्वनुभव एव साक्षिणः सुषुप्त्यव्यव
हितोत्तरमनुस्यूततया अनुभवकालत्वात् ॥ अत एव
वार्तिककारैरपि ॥ न सुषुप्तिगमज्ञानंनाज्ञासिषमिति
स्मृतिः ॥ कालाद्यव्यवधानत्वात् न त्वात्मस्थमतीतभा
क् इत्युक्तम् ॥ तथा चोत्थानकालेसाक्षिण एवानुस्यूत

त्वेन तादृशाकारानुभव एव नस्मृतिरितिचेदुच्यते ॥ अद्वितीयब्रह्मविजिज्ञापयिषयाप्रवृत्त निरुक्तश्रुतिघटक सत्यादिपदानांशुद्धचैतन्यतात्पर्ये कणांत्विशिष्टचैतन्य वाचकत्वेपि शुद्धचैतन्य तात्पर्योद्बुद्धसंस्कारजन्या निर्विकल्पकस्मृतिरेव भवति ॥ यथाताक्किंकवरैरपि ;आकाशः शब्दाश्रयः इत्यत्र आकाशशब्दादपि निर्विकल्पक मुरीक्रियते ॥ अन्यथाआकाशपदस्य शब्दश्रयवाचकतया शब्दाश्रय शब्दाश्रय इति पुनरुक्तिभियैवाभिमतशाब्दबोधानुपपत्तिरतो आकाशपदात् ,शुद्धाकाश तात्पर्याधीनत्वाशुद्धार्थ स्मरणम् ॥ तथा प्रकृतेपि ह्यवधेयम् ॥ न नुसत्याद्यवांतर वाक्यैरेवसत्यादि पदवाच्यार्थोपस्थिति रातत्पदलक्ष्यावांतरवाक्यार्थ बोधः ॥ एवंत्वंपदलक्ष्यस्यापि तथाचालंप्रकृत विचारेणेति चेन्न ॥ न ह्यवांतरवाक्यघटकसत्यादिपदजन्यः खंडशः शाब्दबोध समूलबंधोपमर्दको भवितुमर्हति ॥ तयोरभेदाज्ञानात् ॥ अतस्तयोरज्ञातमैक्यं बोधयन्म ह्यवाक्यमेव तदभेदप्रतिपिपादयिषया अखंडार्थ बोधायप्रयतते ॥ किं च लक्ष्यस्यैकत्वादनुवादकतयाअखंडार्थता ॥ तदेकतात्पर्योद्बुद्धसंस्कारजन्यस्मरण

स्यापि निर्विकल्पकत्वात् तादृशनिर्विकल्पकपदोत्प
न्नार्थोपस्थितिजन्योमहावाक्यीयाखंडार्थावबोधोपि नि
र्विकल्पकएवेतिसिद्धम् ॥ एतस्यैवाखिलाज्ञानजन्य
सविकल्पकद्वैतभ्रमग्रामोपमर्दकतया प्रमात्वमिति अ
द्वैतसिद्धांतः ॥ अत एव लक्ष्यतावच्छेदकत्रिधुरयालक्ष
णाख्यातादृशलाक्षणिकपदजन्यशुद्धलक्ष्यार्थोपस्थिति
हेतुकएव निर्विकल्पकोमहावाक्यार्थबोधइत्यवधेय
म् ॥ अत्रवाक्यार्थस्याखंडत्वंअसंसृष्टत्वमेव ॥ वाक्य
स्याखंडार्थत्वं तु वृत्या स्वघटकपदोपस्थितिविषयार्थ
संसर्गानवगाहिप्रमाजनकत्वम् ॥ अत एवोक्तमभियु
क्तैः । संसर्गासंगिसंम्यग्धीहेतुतायागिरामियम् । उक्ता
खंडार्थतायद्वातत्प्रातिपदिकार्थता इति ॥ ननु तत्वम
सीत्यत्र तत्त्वंपदयोः शुद्धचैतन्येएवशक्तिः स्वीक्रीयता
म् । तथाचाभेदान्वयोपि साधुसंगच्छते ॥ यथा घटो
ऽनित्यइत्यत्र घटपदवाच्येकदेशघटपदस्यान्वयायोग्य
त्वेपि योग्यघटपदव्यक्त्यासहानित्यत्वस्यान्वयः ॥ य
त्रपदार्थैकदेशस्यविशेषणतयैवोपस्थितिः तत्रैवस्वा
तंत्र्येणोपस्थितयेलक्षणाभ्युपगमः ॥ यथाघटोनित्यइ
त्यत्र घटशब्दाद्घटत्वस्यशक्त्याऽनुपस्थितत्वेन ता

दृशोपस्थितेचेघटपदस्यघटत्वेलक्षणा ॥ अन्यथागेहेघ
टः घटेरूपंघटमानयेत्यत्र च घटत्वादेरभिमतान्वयबो
धायोग्यतयातत्रापिघटादिपदानांविशेष्यमात्रेलक्षणा
पत्तिः ॥ तस्माल्लक्षणास्वीकारोऽवश्यं इतिचेदुच्यते ॥
यदिताहशपदजन्यपदार्थोपस्थितिः शक्त्यैवजायेत ॥
तर्हिशुद्धचैतन्येवाच्यत्वमापद्येत ॥ तथाचेयद्वाचनभ्यु
दितं येनवागभ्युद्यते ॥ यतोवाचोनिवर्तंतेइत्याद्याःश्रु
तयोव्याकुप्येरन् किं च यद्वाच्यं तदनित्यमिति नि
यमेनानित्यत्वमापद्येत ॥ अतःशुद्धेशक्तिर्वक्तुमशक्या
विशिष्टेएववक्तव्या ॥ न च लक्षणायामपिशक्यसंबंध
रूपतया असंगोह्ययंपुरुष इति श्रुतिर्व्याकुप्येतेतिवा
च्यम् ॥ तात्विकसंबंधस्यासत्वेपिकल्पितसंबंधस्वीका
रात् ॥ तथाचात्रजाग्रदाद्यवस्थात्रयवानविद्योपाधि
र्जीवस्त्वंपदवाच्यः ॥ अविद्योपाधिर्जीव इति श्रुतेः ॥
तत्पदवाच्यस्तुकारणभूताज्ञानोपाधिरीश्वरएव ॥ मा
योपाधिरीश्वरः इति श्रुतेः ॥ सोपित्रिविधः स्वोपाधिभू
ता विद्यागुणत्रयभेदेनब्रह्मविष्णुरुद्रभेदात् ॥ तत्ररजो
पाधिकोब्रह्मास्त्रष्टा ॥ सत्वोपाधिकोविष्णुःपालकः ॥ त
मोपाधिकोरुद्रः संहर्ता ॥ एवंचेकस्यैवेश्वरस्य चतुर्मु

खचतुर्भुजपंचमुखाद्याः पुमाकारास्तथा श्रीभवानीभार
त्याद्यस्त्र्यकाराः अवताराः भक्तानुग्रहार्थंलीलयेवावि
र्भवंतीत्यवधेयम् ॥ एवंचोपाधिभेदेपितुपधेयाभेदएव॥
स्वरूपाभेदात् ॥ अत एवोच्यते ॥ हरिरूपीमहादेवो
लिंगरूपीजनार्दनः ॥ ईषदप्यंतरंनास्तिभेदकृन्नरकं
व्रजेदिति ॥ अयमेव साक्षीत्युच्यते ॥ एवंतत्वंपदार्थौ
यथोक्तरीत्याविविच्य सम्यक्संशोधितयोस्तयोरसिपद
मैक्यंबोधयति ॥ तथाहिनाहमीश्वरः इत्यादिप्रत्यक्षे
ण किंचिज्ञत्वसर्वज्ञत्वादिविरुद्ध धर्माश्रयत्वादिलिंगेन
च ॥ अपि चद्वासुपर्णासयुजावित्यादिश्रुतिभिः ॥ द्वा
विमौपुरुषावित्यादिस्मृतिभिश्च जीवशिव भेदोवधार्य
ते ॥ अत स्तत्वमस्यादिवाक्यनियथाआदित्योयूपः ॥
यजमानः प्रस्तरः इत्यादिवाक्यवदुपचरितार्थान्येवेति
चेन्न ॥ नाहमीश्वरइत्यादिप्रत्यक्षस्यसंभावितकरण
दोषजन्यतयाअसंभावितदोषश्रुतिजन्यज्ञानेनबाधदर्श
नात् ॥ यथाचन्द्र सूर्यादिग्रहमन्डलपरिमाणग्राहकेन
जोतिःशास्त्रेणप्रादेशिकश्चंद्र इति चंद्रगतप्रादेशिक
त्वबाधदर्शनंतद्वत् ॥ द्वासुपर्णावित्यादिवाक्यापेक्षयाउ
पक्रमोपसंहाराद्यवगताद्वैत 'तात्पर्यवतस्तत्वमस्यादि

: वाक्यस्य प्रबलत्वादेवजीवशिवैक्येविरुद्धधर्माश्रयत्वानु
पपत्तिः ॥ स्वभावशीतस्यैवजलस्यौपाधिकौष्ण्याद्याश्र
यत्ववत् ॥ एवं च स्वभावतोनिर्गुणस्यैव जीवस्यांतः
करणाद्युपाधिवशात् कर्तृत्वाद्याश्रयत्वप्रतिभासत्वोप
पत्तेः ॥ अपिचचैत्रपुत्रस्तेजातइत्यादौसिद्धेपिसंगति
ग्रहदर्शनेनकार्यपराणामेव वाक्यानांप्रामाण्यमितिवद
तोप्यपास्ताः ॥ एवं च तत्त्वंपदवाच्ययोर्विशिष्टयो
रैक्यायोगेपिलक्ष्यस्वरूपयोस्तयोरसिपदमुक्तरीत्यैवैक्यं
सम्यक्बोधयतीत्यवधेयम् ॥ पूर्वोक्तभेदप्रत्ययस्तु अत्यु
च्चगिरिशिखरवर्ति महातरुवरविषयकोभूमिष्ठस्यदूर्वा
प्रवालनिर्भासप्रत्ययवत् भ्रमएवेतिमंतव्यम् ॥ तथा च
तत्वमसीतिवाक्यस्य भागत्यागलक्षणयासोयंदेवदत्त
तिवाक्यवदखंडार्थकतेतिसिद्धम् ॥ एवंचोक्तमहावाक्य
जन्यनिर्विकल्पकाखंडार्थावबोधएवाद्वैतसिद्धिरिति फ
लितम् ॥ एतदेवोक्तं विद्यारण्यस्वामिचरणैः ॥ एकमे
वाद्वितीयं तन्नामरूपविवर्जितम् ॥ सृष्टेः पुराधुनाप्य
स्यतादृक्त्वं तदितीर्यते ॥ श्रोतुर्देहेंद्रियातीतं वस्त्वत्र
त्वंपदेरितम् ॥ एकताग्राह्यतेसीतितदेवमनुभूयता
म् ॥ २ ॥ इतिसामवेदीयम् ॥ ऋग्वेदीयंतु ॥ येनेक्ष

तेंश्रुणोतीदंजिघ्रतिव्याकरोतिच ॥ स्वाद्वास्वादुविजा
नातितत्प्रज्ञानमुदीरितम् ॥ १ ॥ चतुर्मुखेंद्रदेवेषुमनु
ष्याश्वगवादिषु ॥ चैतन्यमेकंब्रह्मातःप्रज्ञानंब्रह्ममय्य
पि ॥ २ ॥ स्वप्रकाशापरोक्षत्वमयमित्युक्तितोमतम् ॥
अहंकारादिदेहांतात्प्रत्यगात्मेतिगीयते ॥ १ ॥ दृश्यमा
नस्यसर्वस्य जगतस्तत्त्वमीर्यते ॥ ब्रह्मशब्देनतद्ब्र
ह्मस्वप्रकाशात्मरूपकमिति ॥ २ ॥ इत्यथर्वणीयम्॥
यजुर्वेदीयंतु ॥ परिपूर्णपरात्मास्मिन् देहेविद्याधिकारि
णि ॥ बद्धः साक्षितयास्थित्वा स्फुरन्नहमितीर्यते ॥१॥
स्वतः पूर्णः परात्मात्रब्रह्मशब्देनवर्णितः ॥ अस्मीत्यै
क्यपरामर्शस्तेनब्रह्मभवाम्यहम् ॥ २ ॥ इदमेवानुभ
ववाक्यमित्युच्यते ॥ नन्वनुभवस्य वाक्यजन्यत्वात्कथं
वाक्यस्यानुभवरूपत्वमिति चेत्कार्यकारणयोरैक्याभि
प्रायेणेवेतिवदामः ॥ तथासतिसर्वेषामेवअनुभवरूप
त्वंसमानंकिमधिकमेकस्येवेति ॥ किं चानुभवजन्यसं
स्कारस्याप्यनुभवरूपत्वापत्तिः ॥ संस्कारजन्यस्मृतेः
संस्कारत्वापत्तिश्च ॥ इतिकेचनशंकामंकुरीयंति ॥
ते एवं प्रत्युत्तव्याः ॥ नवयंकार्यत्वविशिष्टत्वे न
कारणत्वविशिष्टत्वेनवाअभेदंवदामः ॥ किं तुस्वस

ताअतिक्रसत्ताशून्यत्वेन कारणस्यैवकार्याकारेणपरि
णामादभेद इति ॥ अपि च महावाक्योपदेशावसरे
सद्गुरुर्मुमुक्षुं शिष्यंयदासमुपदिदेश हेशिष्यप्रज्ञानंत्र
ह्मास्ति तथाअयमात्माब्रह्म अस्ति ॥ तत्वमसि ॥ इत्यु
पदिष्टःशिष्यः सद्गुरुमभिवाद्यवदति भोस्वामिन् भ
वत्प्रसादादहं ब्रह्मास्मि इति ॥ अपिचोपदिष्टवाक्यत्र
ये प्रथममध्यमपुरुषप्रयोगेनोपदेशवाक्यत्वंत्रयस्य ॥
तुरीयस्योत्तमपुरुषप्रयोगादेवोत्तमत्वम्॥अनुभवरुपत्वा
च्च॥अत एवोक्तमभियुक्तैः ॥ परोक्षावापरोक्षेचविद्या
द्वेधाविचारजा ॥ तत्रापरोक्षविद्याप्तौविचारोयंसमाप्य
ते ॥ १ ॥ अस्तिब्रह्मेतिचेद्वेदपरोक्षज्ञानमेवतत् ॥
अहंब्रह्मेतिचेद्वेदसाक्षात्कारः सउच्यते इति एवंचाहं
ब्रह्मास्मीतिमहावाक्यस्यैवानुभवरूपतया उत्तमत्वमि
ति सिद्धम् ॥ तथाहंब्रह्मास्मीत्यत्राहंपदेनव्यष्टिबुध्युप
लक्षितलिंगशरीरसाक्षित्वेनप्रकाशमानउच्यते॥लक्षण
याब्रह्मशब्दोपिउपदेशकालाद्यनवच्छिन्नसच्चिदानंद
रूपएवअस्मिशब्दस्तु पदद्वयसामानाधिकरण्यलभ्यंजी
वब्रह्मणोरैक्यपरामृशते इत्यवधेयम्॥एवंचानेनवाक्ये-
नाखंडार्थेवधारितेअतिकारिणः अहंनित्यसत्यशुद्धबुद्ध

मुक्तस्वभावपरमानन्दानन्ताद्वयंब्रह्मास्मि इत्यखंडाकारा कारिताचित्तवृत्तिरुदेति ॥ सातुचित्प्रतिविम्बितासतिप्र त्यगभिन्नमज्ञातं विषयीकृत्यतद्गताज्ञानमेवबाधते ॥ तदापटकारणतंतुदाहेपटदाहवत् ॥ आखिलकार्यकार णाज्ञानेबाधिते सति तत्कार्यस्याखिलस्यबाधितत्वा त् तदंतर्भूताखंडाकाराकारिताचित्तवृत्तिरपिबाधिता भवति ॥ तत्र वृत्तौप्रतिबिंबितंचैतन्यमपियथाप्रदी पप्रभाआदित्यप्रभावभासनासमर्था सतितयाभिभूता भवति ॥ तयास्वयंप्रकाशमानप्रत्यगभिन्न परब्रह्मा वभासनानर्हतयातेनाभिभूताभवति ॥ तथा स्वो पाधिभूताखंडवृत्तेर्बाधितत्वात् ॥ दर्पणाभावेमुखप्र तिबिंबस्यमुखमात्रत्ववत् ॥ प्रत्यगभिन्नपरब्रह्ममा त्रंभवति ॥ इदमेवब्रह्मणिव्याप्यत्वंएतस्यैवतावदंगीका रः न फलव्याप्यत्वस्यएतदेवोक्तमभियुक्तैः ॥ फलव्या प्यत्वमेवास्यशास्त्रकृद्भिर्निराकृतं ॥ ब्रह्मण्यज्ञाननाशा य वृत्तिव्याप्तिरपेक्षते ॥ स्वयंप्रकाशमानत्वान्नाभास उपयुज्यते ॥ इति ॥ जडाकाराकारितांतः करणवृत्ते रतु विशेषोदृश्यतेसयथाअयंघटइत्यत्रघटाकाराकारिताचित्त वृत्तिरज्ञातंघटंविषयीकृत्य तद्गताज्ञाननिरसनपुरःसरंस्व

भासातदवभासयति ॥ अत एवोक्तमभियुक्तैः ॥ बुद्धि
तस्थचिदाभासौद्वावेतौव्याप्नुतोघटम् ॥ तत्राज्ञानंधि
यानस्येदाभासेनघटःस्फुरेदिति ॥ अत्रधीशब्देनांतःक
रणवृत्तिरभिधीयते ॥ साद्विविधासम्बधरूपाअवरणभं
गरूपाच इत्यन्यत्रविस्तरः ॥ एवमहंब्रह्मास्मीतिस्वरू
पाद्वैतसाक्षात्कारपर्यंतंमुमुक्षोः साधकस्यश्रवणमनननि
दिध्यासन समाध्यंतानिसाधनानि अवश्यकतयाअपेक्ष
ते ॥ तत्रश्रवणादित्रीण्युक्तपूर्वाण्येव ॥ अधुनासमाधिर
भिधीयते ॥ समाधिर्द्विविधःसविकल्पकोनिर्विकल्पक
श्चेति ॥ तत्रसविकल्पकोनामज्ञातृज्ञानादिविकल्पलल
यापेक्षयाअद्वैतवस्तुनितदाकाराकारितायाश्चित्तवृत्ते
रवस्थानम् ॥ तदामृण्मयगजादिभानेपिमृद्भानवत् द्वै
तभानेपि अद्वैतवस्तुभासते ॥ तदुक्तंभवति ॥ दृ
शिस्वरूपंगगनोपमंपरंसकृद्विभातंत्वजमेकमव्ययम् ॥
अलेपकं सर्वगतं यदद्वयम् तदेवचाहं सततं विमुक्त
तः ॥ १ ॥ निर्विकल्पकस्तु ज्ञातृज्ञेयादि भेदलया
पेक्षयाअद्वितीयवस्तुनि तदाकाराकारितायाः बुद्धिवृत्ते
रितितरामेकीभावेनावस्थानम् ॥ तदाजलाकाराका
रित लवणानवभासेन जलमात्रावभासवदद्वितीय व

स्तुमात्रमेवावभासते ॥ अत एवसुषुप्तिवैलक्षण्यम् ॥ उभयत्रवृत्तिभानेसमानेपि विषयविधायातत्सद्भासद्भाव मात्रेणानयोर्भेदोपपत्तेः॥यमनियमादयोप्यष्टावस्यैवांगा नि ॥ किंचास्यैवांगिनः लयविक्षेपकषायरसास्वादलक्ष णाश्चत्वारोविघ्नाः संभवंति ॥ तत्रलयस्तावदखंडव स्त्वनवलंबनेनचित्तवृत्तेर्निद्रा ॥ अखंडवस्त्वनवलंबनं विक्षेपः ॥ लयविक्षेपाभावेपि चित्तवृत्तेरागादिवासन यास्तब्धीभावादखण्डवस्त्वनवलंबनंकषायः ॥ अखण्डव स्त्वनवलम्बनेनापिचित्तवृत्तेः सविकल्पकरसातन्दास्वा दनं रसास्वादः॥समाध्यारम्भसमयेसविकल्पानन्दास्वा दनम्वा ॥ एतद्विघ्नचतुष्टयरहितञ्चित्तं निर्वातदीप ज्वालादिवदचलंसदेवाखण्डचैतन्यमात्रमवतिष्ठते । यदातदानिर्विकल्पकसमाधिरित्युच्यते ॥ तदुक्तमभियु क्तैः॥ लयेसम्बोधयेच्चित्तं विक्षिप्तंशमयेत्पुनः ॥ सक षायम्विजानीयात्छमप्राप्तन्नचालयेत् ॥ नास्वादयेद्र सन्तत्रनिःसंगःप्रज्ञयाभवेदिति ॥ एवमुक्तसाधनपरिव ृत्तचित्तःसाधकः पुमान् सिद्धदशामनुभवन् जीवन्मुक्त इत्यभिधीयते ॥ सएव स्वस्वरूपाखण्डसच्चिदानन्द शुद्धबुद्धमुक्तस्वभावो ब्रह्मैवाहमस्मीतिज्ञानेन तदज्ञा

नवाधनद्वारास्वस्वरूपे साक्षात्कृते सति अज्ञानतत्का
र्यसञ्चितकर्मसंशयविपर्ययादीनामपि बाधितत्वाद्खि
लबाधरहितोभवति ॥ भिद्यते हृदयग्रन्थिः छिद्यन्तेसर्वे
संशयाः ॥ क्षीयन्तेचास्यकर्माणितस्मिन्दृष्टेपरावरे ॥ इ
त्यादिश्रुतेः ॥ अत्रकर्मपदोत्तरम्बहुलम्प्रारब्धकर्मातिरि
क्तकर्ममात्रेविश्रान्तम् ॥ अन्यथानाभुक्तं क्षीयते कर्म
कल्पकोटिशतैरपि ॥ प्रारब्धकर्मणांभोगादेवक्षयःइत्या
दिवचांसिव्याकुप्येरन् ॥ अतएव ज्ञानाग्निःसर्वकर्माणि
भस्मसात्कुरुतेर्जु नेत्यत्रापि सर्वपदन्तदरिक्तपरतयैवनि
र्वाह्यम् ॥ एवञ्च तस्यतावदेवचिरं यावन्नविमोक्ष्ये
अथसम्पत्स्येत्याद्यागमाअप्यनुकूलाएव ॥ तथाच देह
पातोत्तरमेव विदेहकैवल्यमिति वेदान्तसिधांतः ॥ तस्य
प्राणाः अत्रैवसमवलीयन्ते । नतस्यप्राणाउत्क्रामन्तिय
त्रयत्रमृतोज्ञानीतत्रतत्रावलीयतेइत्यादिश्रुतिस्मृतिभ्यः।
निर्गु णोपासकस्यलोकान्तरगमनाभावःसमधिगम्यते ।
सगुणोपासकानां कर्मिणांचदेवयानपितृयान मार्गावुप
दिश्येते ॥ विद्ययादेवलोकः कर्मणापितृलोकः इत्यादि
श्रुतिभिः ॥ अतएवशारीरकमीमांसायां प्रदीपवदावेश
स्तथाहिदर्शयतिअस्मिन्नधिकरणे॥ यथाएवप्रदीपःअने

कप्रदीपभावमापद्यतेविकारशक्तियोगादेवमेकोपि द्वान् ऐश्वर्ययोगादनेकभाव मापद्यसर्वाणि शरीराण्याविश ति ॥ कुतस्तथाहिशास्त्रम् ॥ सएकधाभवतित्रिधापंच धासप्तधानवधेति ॥ किं च सः एक मनोवर्तिनिसमन स्कान्येवापराणिशरीराणि सत्यसंकल्पत्वात्सृजति ॥ सृष्टेष्वेतेषु उपाधिभेदादात्मनोपिभेदेनाऽधिष्ठातृत्वंयोक्ष ते ॥ एषैश्वर्ययोगशास्त्रेयोगिनामनेकशरीरयोगप्रक्रि येति ॥ अपिच अनावृत्तिः शब्दादित्यांतिमवैर्यासक सूत्रेपियेदेवयानेनपथाब्रह्मलोकंगछन्ति पुनस्तेइमंमान वावर्तनावितेते । सम्यक्दर्शनविध्वस्ततमसांतुनित्यसि द्धनिर्वाणपरायणानामप्यनावृत्तिसिद्धिरितिशांकरभाष्य कारैरप्युदीरितम् ॥ तस्मान्निरुक्तश्रवणादिसाधनसं पन्नः साधकः पुमान् पूर्वोक्तवाक्यत्रयोपदेशोत्तरमेवा हंब्रह्मास्मीत्यनुभववान् भवतीतिसिद्धम् ॥ ननु वेदस्य वाक्यकंदत्वरूपत्वात् कथंअहं ब्रह्मा ॥ स्मीत्यनुभव इ तिचेदुच्यते ॥ नहिकेवलं सद्वसमुदायस्यैव वेदत्वं व क्तुं शक्यते ॥ अपितु तदुपहितचैतन्यस्यैव ॥ अन्य थात्रेप्येवह्येपातिव्याप्तपति ॥ एवंश्रुतिर्व्याकुप्येत ॥ अ पिच याज्ञवल्क्यवान्तवेदस्य अन्यर्षिभक्षणाश्रवणेनापि

मूर्तत्वम्प्रतीयते ॥ नह्यमूर्तस्य भक्षणम्भक्षितस्यच्छर्दनं चसंघटते ॥ अपिच तैत्तिरीयोपनिषदिअन्योतरात्मा मनोमयेत्युपनिषद्भाष्यकारैरपि तस्मान्मनोव्युपाधिप रिछिन्नमात्मज्ञानम्मन्त्राइत्युपसंहृतम् ॥ व्याहृतञ्च पुनर्नित्यत्वमनेकश्रुतिभिः ॥ सर्वेवेदायत्रैकंभवन्ति ॥ स मानसीनमात्माजनानां ॥ ऋचोक्षरेपरमेव्योमन्स्मिन्दे वाअधिविश्वेनिषेदुः ॥ वाचाविरूपनित्ययेति ॥ इत्या द्यागमाः वेदस्यपारमार्थिकमेव नित्यत्वमवगमयन्ति॥ तथाचान्तःकरणव्यवच्छिन्नचैतन्यस्य वेदत्वसिध्यात दभिन्नाभिन्नस्य. तदभिन्नत्वनियमेन वेदस्यान्तःकर णावच्छिन्नचैतन्यवद्ब्रह्मरूपतया अहंब्रह्मास्मीतिसा क्षाद्ब्रह्मरूपानुभव एवेतिफलितम् ॥ एतदर्थमेवद्वि तीयतृतीयलक्षणप्रमाणांशयोरवतारः ॥ तद्विचारेणनां तरीयकतयैव वेदोब्रह्मरुपइत्यवगम्यते॥ तस्मादुक्तश्रु तिस्मृत्याद्यखिलप्रमाणैरविभक्तवेदस्य यजुर्वेदत्वेनमु ख्यत्वं यत्तदेवं विभक्तेपि निरुक्तब्रह्मानुभववाक्यघ टितबृहदारण्यतिरस्कृतस्य शुक्लयजुर्वेदस्यैव मुख्यत्वं सिद्धम् ॥ अतएव बृहदारण्याध्ययनवतां ब्रह्मरूपताकि मुततदर्थानुसन्धानवतामिति शांकरभाष्यकारभाषितम

पिसफलमित्यवधेयम् ॥ एतेन प्रथमोस्थितत्वादिभिऋ ग्वेदस्यैव मुख्यत्वमिति वदन्तोप्यपास्ताः ॥ एतदर्थमे व संगत्यभिधेयादिमांशेब्रह्मविद्प्रसर याज्ञवल्क्यमुनि वर्येण जनकयजनीयपणीभूतगोगणस्वीकरणसमयेगा र्गीबोधितेष्वखिलमुनिवर्गेषु समत्सरः शाकल्योमुनिव रापमानेनदुरन्तांशिरःपातान्तांदुर्गतिमगादित्यनेकदुर्वा दिशतपथगमनार्थाशतपथोलब्धार्थापि यथार्थतयासा र्थकैव समर्थिताभवति ॥ अपिचास्मिन्नपि तुरीयत्रमे यांशेवैशम्पायनीयाः कृष्णयाजुषाअपि व्यासशिष्यत्वा भिमानिकतयावयमेव प्राचीनाः शुक्लास्त्वर्वाचीनाइ त्यनवरतमगर्हयन् ॥ तद्दोषपरिहारायैव साक्षाद्विश्वेश्व रः सुरवरैः सह्यान्ततोर्यद्वैतगजभञ्जनाय पुनरद्वैतमतर्त जनार्यशारीकाचार्यः शंकरः उपनिषद्भाष्यचिकीर्षयानि रनिमानिकत्वयाईशादिबृहदारण्यान्तामेव ब्रह्मविद्यास मष्टिम्मुख्यतया व्यवस्थापयामास ॥ अपिचस्वयंकृ ष्णयाजुषोपि शुक्लयाजुषं सुरेश्वराचार्यमेव भारति सम्प्रदायेमुख्यतया समभिषिषेच ॥ किंच स्वसजा तीयमतिप्रियं निजादिमविनेयं पद्मपादाचार्याभिधेयं नैजभाष्यवार्तिककरणभंगप्रसंगेन सुरेश्वरविहितशा

पानुमोदनमप्यकरोत् ॥ तथैव निजजननिर्नैधनविधि प्रतिबन्धकान् स्वपूर्वाश्रमबांधवान् बहुशः शशापेत्था दिशांकरदिग्जये स्पष्टमेव ॥ आधुनिकमपि अनर्थकरम त्सरकं प्रकृतप्रबलकलिकालीननरचराचरित द्वेषबीजं प्रतीपते ॥ कस्चित्कृष्णयाजुषोबाजिरावाभिधेयः श्रीमान्निजपूर्वजारब्धभीत्र्यम्बकेश्वरमन्दिररचनोत्तरंतादृशमन्दिरोत्तरद्वारेह्यपयत्रपंलिलेख ॥ तत्र शालिबाहनीयवसुव्योमाश्वेन्दुमितेशकेकात्यायनिपति मन्दिरं सम्पूर्णतामगादित्यादि ॥ ततः सत्यविंशतितमेवर्षे अर्चासमभूत् ॥ तदन्तराले एकोनविंशतिवर्षात्मकः कालोदरीदृश्यते ॥ तद्वीजन्तुतेनैवाभिमानिकतया शुक्लयाजुषाणां दक्षिणद्वाराधिकारमुख्यतामथर्वणगोपथब्राह्मणादिभूषितां समवधार्य शास्त्रोल्लघनजन्य लोकापवादभयेनेव तादृशगोपथब्राह्मणपुस्तकेषु हंस पदमभिलिख्य ॥ इषेत्वोर्ज्जेत्वावायव्यस्थदेवोवः सवितेत्यत्र वायवस्थपायवस्थदेवोवइति पाठक्रममकार्षीत् ॥ पुनः कतिपयेषु जीर्णपुस्तकेषु तु यथास्थितमेव दृश्यते ॥ एवमनेकप्रकारैः स्वशाखाभिमानिकतयाशास्त्रव्रह्मब्राह्मणभ्रमकरोत् ॥ तेन न केवलं तस्य कश

राज्यक्षयएवसमभूत् ॥ किन्तु महदनिष्टं फलमप्यत्रा
पेत्यादि ॥ एवंस्वशाखामुख्यतायवेदब्राह्मणाद्यपमा
नेन पुमान् इहामुत्रचमहदनिष्टमेव फलं लभते ॥
अतःकेवलमभिमानिकतयैव ऋग्वेदिनः कृष्णयाजुषा-
श्च महानर्थजनकाध्यासवत् महानर्थजनकम्मत्सरं
कुर्वन्तीति प्रतीयते ॥ नह्यनेकागमादिप्रमाणनिर्णी
तार्थं इचतुराननेनापि युक्तिसहस्त्रैरन्यथयितुं शक्यः।
प्रमाणजन्यानुभवविरोधात् ॥ किञ्च नह्यागमाःसह
स्त्रं घटम्पटयितुमीशते ॥ तस्माद्बृहदारण्यीयात्मा
वाअरेद्रष्टव्य इत्यादिवाक्यविचारेण श्रवणादिसाधन
सम्पन्नः साधकः तत्वमस्यादिमहावाक्यविचारावग-
ताद्वैतात्मनि तादृशनिर्विकल्पकसाक्षात्काररूपात्मद
र्शने समुदिते सति अहं ब्रह्मास्मीत्यनुगर्ववान् भवति
पुमान् ॥ एवंच कर्मोपासनाज्ञानेति काण्डत्रये तथा
प्रस्थानत्रये महावाक्यचतुष्टयेपि शुक्लयजुर्वेदस्यैव
मुख्यत्वं मुख्यतरत्वं मुख्यतमत्वमित्येतावताग्रन्थेन
स्थिरीकृत्यनिश्चितमित्यवधेयमितः परमुपरम्यते ॥ म
श्रीसद्गुरुरामशास्त्रिचरणरजो विरजीभूतजयरामात्म
ज काशिवासिजगन्नाथसूरिविरचितोयंमाध्यन्दिनशा-

खाप्रकाशीयतुरीयः प्रमेयांशः समाप्तिमगात् ॥ श्रीम-
दन्नपूर्णारमणार्पणमस्तु ॥ श्रीरस्तु रेणुकायै नमः ॥
श्रीशं वन्दे ॥ ब्रह्मविद्यानिधिं शुद्धमगजाजं गजाननम्॥
अनेकदन्तं धीमन्तमेकदन्तं नतोस्म्यहम् ॥ १ ॥ अ-
पर्णां पार्वतीमेकामोषधीं सेवयामहे ॥ शूली हलाहलं
पीत्वा यया मृत्युञ्जयोभवत् ॥२॥ ध्यानमूलं गुरोर्मू-
र्तिः पूजामूलं गुरोः पदम् ॥ विद्यामूलं गुरोर्वाक्यं मोक्ष-
मूलं गुरोः कृपा ॥ ३ ॥ ब्रह्मीकृतकलत्रं यं मैत्रेयीप्राणना-
यकम् ॥ अत्रमित्रकृपापात्रं पवित्रं तं नमाम्यहम् ॥४॥
पञ्चमः फलसंज्ञो यं फलैकरसरोचकः॥माध्यन्दिनीयशा-
खायाः प्रकाशीशो विरच्यते ॥५॥ अथ भारतभूवलया-
ङ्गणदिनमणिविदगणितधरणिगीर्वाणधुरीणानिकरमनो-
हराः अपि च सुस्फीतमिहिरमरीचिनिचयविजिततिमि-
रनिकरस्येव भ्रान्ताज्ञानध्वान्तनिरसनचतुराः पुनरकु-
शाऽसंस्थारोप्यंशाः सद्विद्वद्वृन्दमनोमन्दिरानन्दकन्दसं-
दोहजनिखनय इव यथाक्रमं समनुक्रान्ताः अभवन् ॥ ते-
ष्वादिमसंगत्यभिधेयांशो तादृशजनकयजनीयानेकमुनि-
जनपादजयविराजमानयोगीश्वर ब्रह्मविद्ग्रसरयाज्ञव-
ल्क्यमुनिवरोरीकृतब्रह्मवित्पर्णीभूतगोगणसंबन्धेन प्र-

कृतशाखायाः ब्रह्मविन्निष्ठब्रह्मविद्यासामानाधिकरण्य-
रूपा प्रसंगसंगतिरभाणि॥ तत्र प्रकृतशाखाया एवोत्कर्षे
इतरासामवकर्षेण शाखिनो वेदत्वावच्छिन्नस्य सर्वशा-
खावच्छेदेन स्वतः प्रकाशकत्वं भज्येतेति विरोधाभासनि-
रासाय द्वितीयतृययोर्लक्षणप्रमाणांशयोरवतारः ॥ तत्र
लक्षणांशे वेदत्वावच्छिन्नस्यापौरुषेयत्वघटितलक्षणो-
क्त्या पौरुषेयत्वनिराकरणपूर्वकापौरुषेयत्वेन च पारमा-
र्थिकनित्यत्वप्रतिपादनमकारि ॥ तृतीये तु वेदस्य पर-
तः प्रामाण्यं निरस्य पूर्वोत्तरमीमांसानुकूल्येन स्वतः
प्रामाण्यं सम्पादितम् ॥ संक्षेपेण श्रुतिस्मृतिपुराणाना-
मुपासकानां च विरोधपरिहारश्च प्रदर्शितः ॥ एवं तु-
रीयप्रमेयांशेपि ऋग्वेदाद्यपेक्षया यजुर्वेदस्यैव समष्टि-
व्यष्टिरूपतया पुनर्यजुर्वेदस्य शुक्लकृष्णत्वख्या-
पिकाभिराख्यायिकाभिरप्यापाततः मुख्यत्वमभिधायान-
न्तरं वेदत्वावच्छिन्नस्य कांडत्रये तथा प्रस्थानत्रये पु-
नर्महावाक्यचतुष्टयेपि तस्यैव प्रमेयस्य विशिष्य मुख्य-
त्वम्मुख्यतरत्वं मुख्यतमत्वमनेकश्रुतिस्मृतिपुराणेतिहा-
ससूत्रोपनिषदादिप्रमाणगणैः साक्षाद्ब्रह्मानुभववाक्य-
रूपतया च ब्रह्मरूपत्वमप्यापादितम् ॥ एवं च बृहदा-

रण्यशिरस्कायाः प्रकृतशाखायाः ब्रह्मानुभवरूपतया नि-
रपेक्षमुख्यत्वेन तद्विशिष्टशुक्लयजुर्वेदस्यैव तादृशमु-
ख्यत्वमेतावता तुरीयांशपर्यंतेन ग्रन्थेन स्थिरीकृत्याव-
धारितम् ॥ इदानीं तु प्रकृतशाखोन्निनीषया पुनः क-
ण्वादिचतुर्दशशाखापेक्षया तस्याः एव मुख्यत्वप्रतिपि-
पादयिषया च परं तज्ज्ञानजन्यानेकभ्रांताज्ञाननिवृ-
तिफललाभायैवायं पञ्चमांशः प्रपञ्च्यते ॥ ननु या-
ज्ञवल्क्यमुनिवर्यपञ्चदशशिष्येषु कण्वमहर्षेरादिमवि-
नेयतयाप्रथमोपस्थितत्वेन तच्छाखाया एव मुख्यतया
कथमनंतरोपस्थितमध्यन्दिनमुनिवराधिकृतमाध्यन्दिन-
शाखाया एव मुख्यत्वमिति चेद्गाढम् ॥ तत्र या-
ज्ञवल्क्यादिमविनेयं कण्वाभिधेयं वयं न निन्दामः किं
तु वक्रतुण्ड महाकाय ॥ लम्बोदरश्च विकटो ॥ इत्या-
दिवत्स्वरूपं वदामः ॥ अन्यथा गौतमशापविमोहिता
भवेम ॥ अत एव स्कान्दे वैशाखमाहात्म्ये ॥ हे कण्व-
मुने त्वं त्रिलोक्यां निन्दितो भवसि ॥ वायुकर्तृकशाप-
श्रवणेन तदनुयायिनामपि तद्वत्त्वमाशङ्क्यते ॥ त-
दसमञ्जसम् ॥ न ह्येकस्य शापवत्त्वेन तदनुयायि-
नामपि तद्वत्त्वमाशङ्कनीयम् ॥ अन्यथा सकलद्विज-

कुलमूलभूतस्य ब्रह्मदेवस्य त्वं त्रिलोक्यामपूज्यो भ-
वेतिशिवकर्तृकशापश्रवणेन तदनुयायिनामपि-शापा-
रोपे सति ब्राह्मणमात्रस्यापूज्यत्वापत्तिः ॥ वस्तुतस्तु
याज्ञवल्क्यगुरुवर्यैरुत्तरपिनाकन्यां स्वतपःप्रभावेन
तीर्थविशेषं निर्माय कण्वमुनिं विधिवत्स्नापयित्वा मुनिः
शापान्मोचितः ॥ अपि च द्वापरांते दौष्यंतिभरतयुधि-
ष्ठिरादिराजसूयादावाचार्यत्वेनापि श्रैष्ठ्यमवगम्यते ॥
कालीखंडे अष्टाविंशाध्याये ॥ कण्वस्तु मुनिभिः सार्धं
भोक्तुमेवोपचक्रमे ॥ संमपंक्त्युपविष्टस्तु सतोर्थं नैव पा-
णिना ॥ तद्दोषपरिहारार्थं चकार परिषेचनम् ॥ तज्जलं
भित्तिरूपेण पात्रमाच्छादयन्मुनेः ॥ २ ॥ तमपृच्छ-
द्याज्ञवल्क्यः किमेतदिति सांप्रतम् ॥ अवदत्तस्य तत्सर्वं
समीपे सत्यवाग्गुरुम् ॥ त्रिवारमुदितोप्येतत्सत्यमेवा-
वदद्गुरुम् ॥ तदेवं कर्मचाण्डालो भवसीत्युदितोमुना
॥ ४ ॥ तत्क्षणात्कर्मचांडालो बभूव गुरुशापतः ॥ द्रु-
द्रुवुः सर्वगात्रेभ्यः सर्वविद्याश्च तत्क्षणात् ॥ ५ ॥ उ-
पाययुर्गुरुं शिष्यात् विद्यास्तद्गात्रनिःसृताः ॥ निर्वि-
ण्णोचिन्तयद्वायुं सूर्यंगं च महेश्वरम् ॥६॥ निराहारो
जितश्वासो निष्कलङ्को जितेंद्रियः ॥ वर्षायुतन्तपस्ते-

पे तापयन्भुवनत्रयम् ॥ ७ ॥ ततः सूर्यगतः शंभुर्वायुना च समं सुरैः ॥ आविर्भूतोवदत्कण्वं वरं त्वं वरयेति तम् ॥ ८ ॥ एवमुक्तस्तु देवेन प्रहर्षोत्फुल्ललोचनः ॥ वव्रे वरं तमेवेदृक् येर्निरस्तो मुनीश्वरैः ॥९॥ अनिंद्यत्वं तथा लोके स्वीयकर्मणि चार्हताम् ॥ प्रदाय सर्वं विद्याश्च शिव एव तदा मुनेः ॥ १० ॥ अथ वायुस्तमाहूय कण्वं परमहर्षितः ॥ तद्भक्त्या परया बुध्या जगाद करुणाकरः ॥ ११ ॥ मामप्रणम्याध्ययनं कृतं यस्मात्त्वयाधुना॥ मया बुद्धिप्रमोक्षस्ते कृतो वै गुरुशापतः ॥ १२ ॥ अहं ताः सर्वविद्याश्च ददामि तव सुव्रतेत्यादि ॥ कण्वमहर्षिमाहात्म्यं दृश्यते ॥ प्रकृतकलिकालीनकण्वशाखीयानामाचारस्त्वन्यथैव प्रतीयते॥ अस्माच्छाखासूत्रकारैः कात्यायनाचार्यैः वाजसनेयिनां मातुलकन्यापरिणयाभावोऽभिहितः सः सर्वैः पालनीयः एतैर्न पाल्यते अतः एतेषु वाजसनेयित्वसंदेह एवोदेति॥ एवं च यत्र यत्र मातुलकन्यापरिणयकारित्वं तत्र वाजसनेयित्वाभावः ॥ यथाऋग्शाखिनः कृष्णयाजुषाश्च ॥ एवं चैतेषु कण्वेषु वाजसनेयित्वे तदभाव एवापेक्ष्यते ॥ तत्सत्वे तु तेषां गुर्वाज्ञाभंगकारित्वेन विश्वा-

मित्रश्रेष्ठपुत्रवद् पितृत्वादमुख्यत्वमेवातस्तैः सह माध्यन्दिनीयानां यौनसम्बन्धाभावेनाविवाहः ॥ ननु द्वापरे कृष्णार्जुनादिभिरपि मातुलादिकन्याविवाहः कृतस्तदाचार एव मूलम् ॥ यद्यदाचरति श्रेष्ठस्तत्तदेवेतरो जन इत्यादिवचनादिति चेदुच्यते ॥ न देवचरितं चरेदिति ईश्वराणां वचः सत्यं तथैवाचरितं क्वचिदित्यादिवचनैर्महदाचरणनिषेधः प्रतीयते ॥ अन्यथा स्वकुलक्षयाचारोपि प्रसज्ज्येत ॥ किं च पूर्वयुगाचारः प्रकृतयुगे अविधेय एव ॥ यदिहठाद्विधीयेत ॥ तर्हि सः क्षत्रियविषय एव न ब्राह्मणविषयः ॥ कृष्णार्जुनादीनां क्षत्रियत्वात् ॥ अन्यथा कात्यायनसूत्रकारप्रतिज्ञा भज्येत ॥ तस्मात्प्रथमोपस्थितायाः अपि कण्वशाखायाः न मुख्यत्वम् ॥ किं तु गुर्वाज्ञापालकानां माध्यन्दिनानामेव मुख्यत्वम् ॥ ननु शांकरभाष्यकारैः कण्वपाठानुसारेणैव ईशबृहदारण्ययोर्भाष्यमकारि ॥ तस्मादेव मुख्यत्वमित्यपि न भ्रमितव्यम् ॥ तत्पाठसारस्याभिप्रायेणैव भाष्यकरणं न तु मुख्यत्वाभिप्रायेण ॥ अन्यथा सूत्रकारशैली भज्येत ॥ किं च यस्यां सूत्रं भवेत्सा हि मुख्येति परिकीर्त्यते ॥ इत्यादिवचनव्यापको-

इच ॥ अपि च एषा हि सूत्रकाररीतिर्वर्तते ॥ यन्मुख्यशाखोक्तप्रतीकमुपाददते ॥ अमुख्यशाखोक्तांश्च मन्त्रान् सकलान्, पठतीति प्रसिद्धम् ॥ तथा च कात्यायनसूत्रकारैर्माध्यन्दिनशाखोक्तमन्त्राः अयमग्निः पुरिष्योरयीमान् ॥ शिवो नामासी इत्यादयः प्रतीकमात्रेणोक्ताः ॥ उलूखलमुसले अप्यायतांधु वाहविषा इत्यादयः काण्वाः मन्त्रास्तु सकलाः परिगृहीताः ॥ तथा च माध्यन्दिनशाखानुसारेणैव भगवतः सूत्रकृतः प्रवृत्तिस्तस्मात् माध्यन्दिनशाखाया एव मुख्यत्वम् ॥ किं च गौणमुख्ययोर्मुख्यस्यैव, सूत्रकृत्स्वीकरणीयतया इतरासां चतुर्दशशाखानाममुख्यत्वमार्थिकमेव समर्थितं भवति ॥ अत एवोक्तमभियुक्तैः ॥ यजुर्वेदस्य मूलं हि भेदो माध्यन्दिनीयकः ॥ सर्वानुक्रमणी तस्याः कात्यायनकृता तु या इत्यादि ॥ किं च व्यासादिविरचितचरणव्यूहादावपिजाबाला बौधायनाः कण्वा इत्यादिपाठे कण्वानां तृतीयभेदेन प्रथमशाखित्वानुपपत्तिः ॥ अपि च चरणव्यूहस्य शौनककृतभाष्ये कण्वत्रैविध्यं प्रतीयते ॥ एकः ऋग्वेदी कण्वः द्वितोयो वसुदेवस्तृतीयो याज्ञवल्क्य इति ॥ तत्र यः हस्तस्वरेण दीर्घपाठी

मातुलेयीपरिणयाभाववान् स एव याज्ञवल्क्यः कण्वः॥ प्रकृतकालिककण्वानां तु तादृशलक्षणाभावात् न याज्ञवल्क्यीयत्वमपि तु वसुदेवकण्वत्वमेव दृश्यते॥ पुनरनुभूयते चास्मिन्निलातले वर्तमानकाले कण्वशाखाल्पत्वम्॥ यथामाध्यन्दिनशाखीयानां प्राचुर्यं न तथा तेषां किमु तान्येषां जाबालादीनां त्रयोदशानामिति॥ किं च ऋग्वेदिनामिव प्रथमोपस्थितत्वेन ज्येष्ठत्वं यदि उच्येत तदपि न संघटते ॥ सूचीकटाहन्यायेनैव पूर्वोपस्थितत्वं न तु मुख्यतयेति॥ अन्यथानिरुक्तसूत्रकारशैलीविलयमाकलयेदिति॥ अपि च प्रथमोपस्थितत्वस्य मुख्यत्वप्रयोजकत्वं ऋग्वेदपरीक्षायां तुरीयांशे समभिहितपूर्वमेवानुसंधेयम्॥ एवं च कण्वशाखापेक्षया कात्यायनसूत्रकाराभिमतमध्यन्दिनमुनिवराधिकृतप्रकृतशाखाया एव मुख्यत्वमिति सिद्धम्॥ अत एव मध्यन्दिनमहर्षेर्माहात्म्यमादित्यपुराणादावनुभूयते॥ तथाहि॥ मध्यन्दिनतपस्तुष्टो मध्यान्हस्थो दिवाकरः॥ तदीयोत्तरवस्त्रेण प्रच्छन्नकिरणो बभावित्यादि॥ अत एव मध्यान्हकालावच्छेदेन स्वोत्तरीयाच्छादिततरणिकिरणत्वान्मध्यन्दिनेति नामापि सा-

र्थकतामगात् ॥ अत एव माध्यन्दिनीयानां सूर्योपासकतया सूर्यरूपत्वं उपास्योपासकयोरभेदात् ॥ तथा हि आदित्यपुराणे ऋषयऊचुः ॥ किं तुल्या ब्राह्मणाः सर्वे संति हीनाधिकाश्च वा। वक्तुमर्हस्यशेषेण सर्वशास्त्रविशारद । १। सूत उवाच ॥ हीनत्वमधिकत्वञ्च तत्तत्कर्मनिबन्धनम् ॥ स्वधर्मा च्छ्रेष्ठतां यांति परधर्मी निरर्थकः ।२। गायत्रीमंत्रसारात्तु तैत्तिरीयो द्विजोधिकः ॥ ऋग्वेदी च ततः श्रेष्ठः सामगस्त्वेकदेशतः॥ ततस्त्वयातयामायां शाखायां शिक्षितो द्विजः सामश्रवादिशिष्याणां सामगानामपि स्वयं ॥ आचार्यो याज्ञवल्क्योथ स्वश्रुत्या प्रतिपादितः॥ तस्मात्तदीया ये शिष्याः सामगेभ्योधिकाः स्मृताः ॥ ५ ॥ तेभ्यो हव्यानि कव्यानि दातव्यानि द्विजातिभिः ॥ विद्यमानेषु विप्रेषु वाजिषु ब्रह्मवादिषु ॥ ६ ॥ तान्हित्वा भोजयेद्यस्तु हव्यकव्येषु नारकी ॥ वाजेवाजे वर्तेत्यस्य मन्त्रस्यार्थो मया श्रुतः ॥ यजूंषि यैरधीतानि ते वै विप्रा द्विजोत्तमाः ॥ वाजिनस्ते समाख्याताः सूर्यस्त्वश्वोभवद्यतः॥ ८ ॥ भोक्तृष्वन्येषु विप्रेषु दैवे पैत्र्ये च कर्मणि ॥ तद्वाजिनां भावनया ब्राह्मणानां कृतं भवेत् ॥९॥

सौवर्णादिषु बिम्बेषु देवताभावना यथा ॥ भोक्तव्य-न्येषु विप्रेषु वाजिब्राह्मणभावना ॥ १० ॥ तदर्थां च श्रुतिं ज्ञात्वा ऋषयः सूत्रकृत्तमाः ॥ पितॄणां वन्दने के-चित् केचिदुत्सर्जने तथा ॥ केचित्प्रदक्षिणे प्रोचुः वाजि-विप्रपरं मनुम् ॥ याज्ञवल्क्यप्रभावस्तु वर्णितो वैष्णवे पुरा ॥ पाराशरेण मुनिना कण्वादीनां विशेषतः ॥ गुरु-त्वं प्राप्य योगीशः स्वकीयोपनिषत् स्मृता ॥ १३ ॥ श्रुतिस्मृतिपुराणेषु याज्ञवल्क्यस्य वैभवं ॥ पदं वा वेत्ति को वात्र कृष्णद्वैपायनादृते ॥१४॥ तस्माद्द-व्यानि कव्यानि दातव्यानि द्विजातये॥ वाजिने दत्तमे-कं तु तत्कोटिगुणितं भवेत् ॥ १५ ॥ अश्नीयाद्याच-यित्वान्नं शुद्धं वाजसनेयकं ॥ नग्नां स्त्रियं निरीक्ष्य तः पश्चात्सूर्यं विलोकयेत् । संध्याकाले च रात्रौ तु विप्रं वाजसनेयिनं ॥ निशीथे निर्जले देशे रोगार्ते वा कले-वरे ॥ औषधे पीयमाने वा त्वरायां संकटेथ वा ॥ स्पृष्टो विप्रो यदि भवेत् चांडालादिशतैरपि । शुद्धिरेव भवेद्द्रव्यः स्पृष्ट्वा वाजसनेयिनं। पादद्वयं नमस्कृत्य ध्यात्वा संकीर्त-येत्सकृत् ॥ १६ ॥ अश्राव्यवचसो रावः पापिनां प्रति-लोमिनां॥ वाचं च शृणुयाद्विप्रो वाजी वाजीति कीर्तयेः

त्॥२०॥ अज्ञानाद्यदि वा शूद्रं श्मशानं वा शवं स्पृ-
शेत्॥ प्रदक्षिणं परिक्रामेत्स पापो ब्रह्महा भवेत्। भूप्र-
दक्षिणमेतस्य प्रायश्चित्तं विदुर्बुधाः ॥ रहस्यमेतन्न
विदुर्वाजिविप्रप्रदक्षिणम् ॥ २२ ॥ शूद्रान्नं रजकान्नं
वा लशुनं वा प्रमादतः। भक्षयित्वा तु तत्तस्य प्रायश्चित्त-
मिदं परम्।२३। यद्वाजिनां गृहं गत्वा तदीयान्नस्य भोज-
नम् ॥ किमत्र बहुनोक्तेन रहस्यं शृणुतादरात् ॥२४॥
शारीरं वाचिकं यच्च मानसं वापि पातकम्। तत्सर्वं न-
श्यति क्षिप्रं वाजिवाजीतिकीर्तनात् ॥ २५॥ कलुषा-
ब्धौ निमग्नानां द्विविधं तारकं स्मृतं॥ विष्णोः संकीर्त-
नं वापि वाजिब्राह्मणकीर्तनम् ॥ २६ ॥ तत्रापि
गोप्यं शृणुत वाजिनामाष्टकं परं॥ नरके पच्यतः सोम-
शर्मणः सद्गतीच्छया ॥२७॥ नारदेन ह्युपादिष्टं स-
द्यः स्वारोचिषेंतरे ॥ वाजीवाजसनिर्विप्रो ऋतज्ञः पं
क्तिपावनः। तथा वाजसनेयी तु ब्रह्मिष्ठोमृत एव च ॥
नामान्यन्यानि पुण्यानि योगरूढानि वाजिनां ॥२८॥
न किंचिल्लक्षणां यांति सूर्ये भास्करशब्दवत्। छन्दोऋषि-
रनुष्टुप् च विवस्वान् समुदीरितः। वाजिनो याज्ञवल्क्यी-
याः शांत्यर्थं विनियुज्यते ॥ अयुतं भास्करक्षेत्रे जप्त्वा

भीष्टमवाप्नुयात् ॥ सत्यं सत्यं पुनः सत्यं भुजमुद्धृत्य चोच्यते ॥ न कश्चिद् दृश्यते लोके तुल्यो वाजसनेयिना॥ एतत्सर्वं समाख्यातं ब्राह्मणानां च वैभवमित्यादिस्य- पुराणीयोत्तरार्द्धे द्वादशाध्याये स्पष्टम् ॥ एवं च वाज- सनेयिनां साक्षात्सूर्यरूपतया सूर्यवत् पूज्यत्वं सिद्धम्॥ अत एव रामकृष्णादयोऽप्यवतारा: पूर्णतया वाजसनेयि- न एव॥ ब्रह्मपुत्रस्य वशिष्ठस्य ब्रह्मर्षित्वेन चतुर्वेदवत्त- याप्यवतरिष्यमाणश्रीरामचन्द्रोपदेशाय शुक्लयजुर्वे- दीयसर्वमुख्यमाध्यन्दिनशाखाभिमानिकतयैव साक्षाद् ब्रह्मर्षिवर्यः सूर्यवंशपौरोहित्यं स्वयमुरीचकार॥ क्षत्रिया- णां पौरोहित्यगोत्रत्वेन तद्वत्त्वात् ॥ एवं चन्द्रवंशीयः श्रीकृष्णोपदेष्टा सूर्य इव गर्गाचार्यः कण्वशाखीयः प्रसिद्ध एव। ननु द्वापरादौ व्यासेनैकं वेदं चतुर्धा विभज्य चतु- र्भ्यः पैलादिभ्यः समर्पित इति पुराणादिषु प्रतीयते ॥ किं च वैशंपायनशिष्येण याज्ञवल्क्येन पूर्वगुर्वधीतं छ- र्दयित्वा स्वतपस्तोषितादादित्यादयातयामशुक्लयजूं- षि उपलभ्य ततः कण्वादिभ्यः समर्पितानीति तत्कथं त्रेता- यां व्यासप्रपितामहेन वशिष्ठेन तादृशमाध्यन्दिनशा- खित्वमादृतमिदमंशेऽपि न भ्रमितव्यम्॥ याज्ञवल्क्यस्य

साक्षात्सूर्यशिष्यत्वेन नारायणशिष्यब्रह्मसमतयाव्यास-
गुरुत्वमपि आदित्यपुराणादावुपलभ्यते ॥ तथाहि व्या'
सः पराशरमुनौ पितरि स्थितेपि साक्षात्स्वयं मधुहरोपि
यमेव वव्रे॥ आचार्यमद्भुतगुणाकरराजमानं तं याज्ञव'
ल्क्यगुरुमेव सदानतोस्मि ।१।इदमेव पराशर्यस्मृत्यारं-
भेप्युक्तम् ॥ ननु श्रीमद्भागवताद्यनेकपुराणगणप्रमापि-
तव्यासशिष्यशिष्यत्वं याज्ञवल्क्यस्यानुभूयते ॥ निरुक्ता-
दित्यपुराणवचसाव्यासगुरुत्वमुच्यते इति विरुद्धमिति चे-
न्न॥यजुर्विशेषस्य कृष्णत्वबोधनमात्रतात्पर्यंतया स्वार्थे
तात्पर्याभावात् व्यासशिष्यत्वबोधिकायाः आख्यायिकायाः
तथाहि एक आसीद्यजुर्वेद इत्यादिप्रमाणावगतसमस्त-
वेदस्तोमं भक्षयितुं पातालतलात्समायाते दानवविशे'
षे सर्वज्ञः सूर्यः स्वस्वरूपं सारभूतं शुक्लयजुर्भागं तदाग-
मात्पूर्वमेव स्वयं जुगोप तं च प्रियशिष्यं याज्ञवल्क्यं पाठ,
या मास । ततः परं सः याज्ञवल्क्यादेव विख्यातिमगात्।
अत एवव्यासः पराशरमुनौ पितरि स्थितेपि याज्ञवल्क्या
देव ईशादिबृहदारण्यांतं शुक्लयजुर्गणं पपाठेति व्यास
गुरुत्वं मुनौ विलसतीति याज्ञवल्क्याष्टोत्तरशतनामघ'
टकं कृष्णद्वैपायनाचार्येति नामापि सार्थकतामनुगच्छति।

पुनः कियतासमयेनवेदव्यासं चिकीर्षुर्वेदव्यासः नैजं सारभूतं गौरवं भागं भानौ निहितवान् । अत एव भागवतादिषु याज्ञवल्क्यस्य स्वभागप्राप्तौ मुख्यतया सूर्यशिष्यत्वमेव प्रतीयते ॥ वैशंपायनशिष्यत्वं तु तच्छिष्याणां त्तित्तिरित्वप्रदानायैवापि च निजयजुर्भिन्नयजुषः कृष्णत्वमाविष्कर्तुमिति न कोपि शकापंककलंकावकाशः ॥ एवं च जगदवनादिपरायणस्य साक्षात्सूर्यस्य शुक्लप्रधानतया नारायणरूपत्वं तत् पुत्रपौत्रादीनां पमभूवशिष्ठादीनामपि शुक्लयजुर्वेदतया वाजसनेयित्वं त्वरीवर्ति इत्येव परमाकूतमाविर्भवतीत्यवधेयम् ॥ ननूक्तरीत्याव्यासशुकादीनां वाजसनेयित्वे तच्छिष्यपरंपराघटितशंकराचार्यस्य कृष्णयजुष्ट्वेन कथं वाजसनेयित्वमिति चेदुच्यते ॥ ब्राह्मणस्य सर्वसंस्कारेषु आत्मसंस्कारत्वेनोपनयनद्वारा गायत्र्युपदेशस्यैव मुख्यत्वम् ॥ तदर्थबोधकमहावाक्यार्थोपदेशस्य चरमत्वम् । अंतरालिकानामनंतरालिकानां सर्वेषां साक्षात्परंपरया आद्यन्तोपयोगित्वं सर्वसंमतम् । तथा च गायत्र्यर्थपर्यवसानरूपाणां चतुर्णामपि महावाक्यानां द्विजत्वावच्छिन्नप्राप्यत्वावश्यंभावित्वात् तत्तदुपदेश

आवश्यकः । अयमेवार्थः शुकमुपनिनीषुणा महर्षिणा व्यासेन शुकरहस्योपनिषदिव्यक्तीकृतः॥ तथा विद्यारण्य स्वामिचरणैरपि स्वीयप्रकरणे। एवं बृहदारण्यभाष्यवार्तिककारैः सुरेश्वराचार्यै रपि संन्यासिनां पंचीकरणवार्तिकमकारि ॥ तदेव तेषामनुष्ठेयत्वं नाभिमतम् ॥ किं च संन्यस्य श्रवणं कुर्यादितिविध्यवगतं संन्यासोत्तरमेव श्रवणाद्यधिकारसिध्यर्थं उपनीतस्य गायत्र्युपदेशवत्तेषामपि तदुपदेशकाले तद्गुरुभिस्तत्तच्छाखीयोपनिषद्गतं तन्महावाक्यमेवोपदिश्यते। एवं च चतुर्वेदकृप्तान्येव महावाक्यानि तेषु द्वितीयन्तु शुक्लयजुर्वेदीयबृहदारण्यघटकतृतीयाध्यायमध्यगतं ब्रह्म वा इदमग्र आसीत् तदात्मानमिवावेद अहं ब्रह्मास्मीतिब्राह्मणानुवाकघटकमेव महावाक्यं कृष्णयाजुर्वेभ्य उपदिश्यते। ननु तैत्तिरीयाणामपि स यश्चायं पुरुषे यश्चासावादित्ये स एकः इति महावाक्यं पृथक् वर्तते इति शंक्यं ॥ तस्यमहावाक्यत्वेपि प्रथमोपदेशयोग्यताविरहेण शुकरहस्योपनिषदादिषु अनुक्तत्वात् ॥ किंतु पूर्वोक्तस्यैवोक्तत्वादतस्तदेव प्रथमं उपदिश्यते। तस्यानुभवरूपत्वं तु सुचिरं विविच्य रुचिरमवोचमेव ॥

तथा च कृष्णयजुर्वेदवतोऽप्याचार्यस्य] साक्षाच्छिवावतारतया सर्वज्ञस्येपि तादृशबृहदारण्योयानुभवरूपमहावाक्योपदेशेन वाजसनेयित्वमव्याहतमेव। अत एव वार्त्तिककारं सुरेश्वराचार्यमेष निजमठपीठे मुख्यतया समभिषिषेच। किं च शुक्लयाजुषाभिमानेन ईशादिबृहदारण्यांतामेव ब्रह्मविद्यां व्यवस्थापितवान्। अपि च मुक्तिकोपनिषदि श्रीमद्रामचन्द्रेण ऋग्सामाथर्वणवेदानां सामान्यतः पञ्चाशच्छाखाः एकविंशतिशाखाः इत्यादिक्रमेणापादितम्॥ यजुर्वेदस्य तु भागद्वयं कृत्वा नैजादिमभागस्य शुक्लयजुर्वेदाभिधानेन सूर्यरूपतया च शुक्लत्वेन प्रथमत्वं ज्ञापयित्वा पुनर्द्वितीयभागस्याप्यवांतरभेदमभिधाय वाजसनेयिशाखातैत्तिरीयशाखेतिभेदः स्फुटतरमभिहितः॥ तत्र शुक्लस्यैव सूर्यरूपतया मुख्यत्वं प्रथमशब्देनावधारितम्। प्रथमशब्दस्य मुख्ये रूढेः सत्वात्॥ एवं च पराशरमाधवादिचिरंतननिबन्धेषु भारतादीतिहासभागवतादिपुराणेष्वपि बौधायनापस्तम्बादिसूत्रेषु तत्तत्सूत्रव्याख्यानभाष्यपराशरादिस्मृतिव्याख्याहेमाद्रिमाधवीयनृसिंहपारिजातादिप्रबंधेषु याज्ञवल्क्यकण्वमध्यन्दिनकात्यानादीना-

मेव मुख्यत्वमकपटतया प्रस्फुटं संजाघटीतीत्यवधेयम् ॥ किं च लघुजाबालोपनिषदि श्रीमद्याज्ञवल्क्यमाहात्म्यं प्रतीयते॥ तथाहि मुमुक्षोराकांक्षामनुसृत्य देवगुरुर्बृहस्पतिः मूलस्मृतिकारोत्रिः ब्रह्मजिज्ञासुर्जनकश्च मोक्षसाधनप्रश्नान् कृतवंतः ॥ तत्प्रश्नोत्तरत्वेन याज्ञवल्क्यो वाक्यान्युक्तवान् ॥ तद्यथा साक्षान्मोक्षसाधनानि पञ्च पशुपक्षिकृमिकीटस्थावरजङ्गमादिजन्तुमात्रस्य अधिभूतकाश्यां मरणे ॥ अत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे॥ योसावमृतीभूत्वा मोक्षीभवति ॥ इत्यादिवाक्यैः परमेश्वरेण कृततारकोपदेशद्वारा ज्ञानान्मोक्षो भवतीति ढुण्ढिराजान्नपूर्णागंगाविश्वेश्वरमणिकर्णिकादिचिह्नितेसुकृतिजनगम्ये सर्वप्रमाणप्रसिद्धे ऽविमुक्तवाराणसीक्षेत्रे विशेषात्मकाधिभूतकाशिमरणमेकं मोक्षसाधनम् ॥ १ ॥ पश्वाद्यपेक्षया अधिकज्ञानवतः पुरुषस्य काशीभावनाकर्तुरयं देश एव काशीतिभावनावतः सर्वव्यापको विश्वेश्वरस्तारकमुपदिशति तज्जन्यज्ञानप्राप्तिद्वारा काशीभावनापि द्वितीयं मोक्षसाधनम् ॥ एवं ब्रह्मसूत्रतद्भाष्योक्तरीत्या वेदांतविचारपराणामधिकारिणां स्वदे-

ह एव काश्यसीवरुणादि कल्पनाद्वारा वैश्वानरा स्यविशडभिन्नब्रह्मध्यानं स्वदेह एवाध्यात्मकाशित्वेन ज्ञानध्यानात्मकं मोक्षसाधनं तृतीयं ।चतुर्थं तु स्वशाखाविध्युक्तो रुद्रजपः ॥ पञ्चममन्तरङ्गसाधनात्मकं सर्वत्यागरूपं संन्यासात्मकमित्यादिप्रमाणैरपि याज्ञवल्क्स्य सुरगुर्वाद्युपदेशकृत्त्वमनुभूयते॥ अपि चाथर्वणशाखीयोपनिषदि बृहस्पतिभारद्वाजावपि तारकमन्त्रप्रश्नोत्तरत्वेन कृतार्थावभूताम्॥ एवं बृहदारण्यीयपञ्चमषष्ठाध्याययोर्निजयजनाधिकृतजनकेन विहितब्रह्मवित्परीक्षापणीभूतस्वर्णाभरणगोगणस्वीकरणानिमित्तकमत्सरमलिनीभूताश्वलादिमुनिवरनिकरे योगीश्वरयाज्ञवल्क्यमुनिवर एव ब्रह्मविद्प्रसरत्वनिश्चयः ॥ पुनराश्वलशाकल्यादिभिः सह कर्मोपासनाज्ञानविषयकपरीक्षाविचारः ॥ तत्पराजयपूर्वकयाज्ञवल्क्यविजयश्च ॥ अपि च कहोलकौषीतकब्राह्मणयोः यत्साक्षादपरोक्षाद् ब्रह्म यः आत्मा सर्वान्तरः ॥ इत्यादिना याज्ञवल्क्यस्याप्रतिबद्धापरोक्ष साक्षात्कारवत्त्वप्रदर्शनेन षष्ठाध्याये जनकं प्रति संक्षेपविस्तराभ्यां ब्रह्मोपदेशद्वारा अभयं वै जनक प्राप्तोसीत्यादिना ब्रह्म-

प्रापकत्वं॥ इमे विदेहाः अयमहमस्मीति विदेहान् ददामि मां चापि सह दास्यायेति जनकोक्तलिंगेन जनकस्य सम्पूर्णाविचिकित्सब्रह्मसाक्षात्कारज्ञापनम् ॥ अपि च मैत्रेयीमपि ब्रह्मोपदेशद्वारा ब्रह्मरूपतां प्राप्य एतावदरे खल्वमृतत्वमिति होक्त्वा विजहारेति मुनिवरस्य विद्वत्संन्यासाश्रयणेनानवरतब्रह्माकाराकारितांतःकरणवृत्तिकत्वादिमाहात्म्याविष्करणायैव बृहदारण्यप्रवृत्तिरिति निश्चीयते॥ अत एव ब्रह्मसूत्रकारैः पराशरमुनिवरैः, शांकरभाष्यकारैर्भगवत्पूज्यपादाचार्यैस्तयैव वार्तिककारैः सुरेश्वराचार्यैः पुनर्भाष्यं व्याकुर्वाणैरानन्दगिरिचरणैः चतुर्वेदभाष्योभयमीमांसाधिकरणरत्नमालारचनाधुरीणैः पराशरस्मृतिव्याख्याकारैर्विद्यारण्यस्वामिचरणैर्बहुभिर्ग्रन्थकारैस्तदुक्तवचनसहस्रैर्योगीश्वरयाज्ञवल्क्यमाहात्म्यसंपादनेनाभ्युंद्ध्यौ सूर्य इव मुनिवर्यो विराजते॥ मुनिवर्यस्य समस्ताम्नायरूपत्वं तु बृहज्जाबालसंहितायामभिहितपूर्वमेव ॥ तस्यैव याज्ञवल्क्यस्य त्रैविध्यमपि प्रतीयते। तत्र एक ऋग्वेदी याज्ञवल्क्यः अपरो देवरातपुत्रस्तृतीयस्तु त्रिपुरुषानुगं नामेतिवचसा याज्ञवल्क्यायाज्ञवल्क्येत्यादिश्रु-

तिप्रातिपद्यं आधुनिको याज्ञवल्क्यः ॥ तत्र देवरात-सुत एव मुख्यो याज्ञवल्क्यः तस्यैव साक्षात्सूर्यशिष्यत्वेन वृद्धयाज्ञवल्क्य इति व्यवहारः ॥ एवं कात्यायनत्रैविध्यमपि प्रतीयते तद्यथा कतस्यर्षेर्गोत्रापत्यं गर्गादियञ् कतर्षिगोत्रापत्यं युवा गर्गादियञ् यञंतत्वात् पूनि फक् ॥ कतस्य युवापत्ये ऋषिभेदे स च त्रिविधः ॥ विश्वामित्रवंश्यः गोभिलपुत्रः वसुदत्तागर्भजः वररुचिनाम्ना ख्यातश्च । तत्र विश्वामित्रगोत्रोत्पन्नः हरिवंशे उक्तो यथा ॥ विश्वामित्रस्य च सुताः देवरातादयः स्मृताः ॥ विख्यातास्त्रिषु लोकेषु तेषां नामानि मे शृणु ॥ देवश्रवाः कतश्चैव यतः कात्यायनाः स्मृताः ॥ इति अयं च गोभिलपुत्राद्भिन्नः गोभिलपुत्रकात्यायनेन कर्मप्रदीपाख्यं छन्दोगपरिशिष्टरूपं शास्त्रं प्रणीतं ॥ तृतीयस्तु कतस्य युवापत्यं कात्यायनः अनेनैव शुक्लयजुर्वेदकर्मणामनुष्ठानज्ञापकं षड्विंशत्यध्यायात्मकं कातीयं श्रौतसूत्रं गृह्याख्यं सूत्रं च प्रणीतं अष्टादश परिशिष्टानि विरचितानि तथा पाणिनीयसूत्रवार्तिकानि च रचितानि ॥ वररुचिनाम्ना तथा पारस्करनाम्ना च ख्यातः ॥ याज्ञवल्क्यस्याप-

रगेहिनीकात्यायनीबन्धुत्वाद्याज्ञवल्क्यस्य शालोपि वि लसति इति ॥ एवं च कात्यायनादिसहितो याज्ञवल्क्यमुनिवर्यः सूर्य इव सर्वैर्वैदिनीयः पूजनीयः कीर्तनीयश्च परं स्मरणीयः यथा हि सर्वाज्ञानतिमिरनिकरनिरसनचतुरः सहस्त्रकरः स्वयं प्रकाशोपि स्वकरैः परान् प्रकाशयति ॥ एवं मुनिवरोपि ब्रह्मरूपतया स्वयं प्रकाशः सन् श्रुत्यादिप्रमाणसहस्त्रैरजस्त्रं सर्वान् प्रकाशयतीति सहस्त्रकराभिन्न एव मुनिवरः ॥ उपास्योपासकयोरभेदात् ॥ शिवो भूत्वा शिवं यजेदित्यादिवचनाच्च ॥ अभेदोपासनाया एवाद्वैतसंमततया याज्ञवल्क्योप्यादिपुराणे आदित्याभेदेनैव मित्रादिद्वादशनामभिर्द्वादशात्मा यथा स्तूयते एवं मुनिवर्योपि स्तूयते तथा हि ॥ वन्देऽहं मंगलात्मानं भास्वंतं वेदविग्रहं ॥ याज्ञवल्क्यम् मुनिश्रेष्ठं जिष्णुं हरिहरप्रभं ॥ १ ॥ जितेन्द्रियं जितक्रोधं सदाध्यानपरायणम् ॥ आनन्दनिलयं वन्दे योगानन्दं मुनीश्वरं । २ । एवं द्वादश नामानि त्रिसंध्यं यः पठेन्नरः ॥ योगीश्वरप्रसादेन विद्यावान् धनवान्भवेत् ॥ एवमेवाष्टोत्तरशतनामभिरपि स्तूयते तथाहि ॥ यस्य स्मरण-

मात्रेण सुलभस्तत्त्वनिश्चयः ॥ ब्रह्मिष्ठप्रवरस्यास्य याज्ञवल्क्यस्य शोभनं ॥ १ ॥ नाम्नामष्टोत्तरशतं तत्त्वज्ञानप्रदायकम् ॥ सर्वपापप्रशमनं आयुरारोग्यवर्धनम् ॥ २ ॥ इदं जपन्ति एवैते मुक्तिमेव समाप्नुयुः ॥ ओं श्री याज्ञवल्क्यो ब्रह्मिष्ठो जनकस्य गुरुस्तथा ॥ लोकाचार्यस्तथा ब्रह्मा मखजो योगिनां पतिः ॥ शाकल्यप्राणदाता च मैत्रेयीज्ञानदो महान् ॥ ५ ॥ कात्यायनीप्रियः शान्तः शरणत्राणतत्परः। धर्मशास्त्रप्रणेता च ब्रह्मविद् ब्राह्मणोत्तमः ॥६ । योगीश्वरो योगमूर्तिर्योगशास्त्रप्रवर्तकः ॥ गतागतज्ञो भूतानां विद्याविद्याविभागवित् ॥ ७ ॥ भगवान् शास्त्रतत्त्वज्ञस्तपस्वी शरणो विभुः ॥ तत्त्वज्ञानप्रदाता च सर्वज्ञः करुणात्मवान् ॥ ८ ॥ संन्यासिनामादिमश्च सूर्यशिष्यो जितेन्द्रियः ॥ अयातयामसंज्ञायां प्रवर्त्तनपरो गुरुः ॥ ९ ॥ वाजिविप्रोत्तमः सत्यः सत्यवादी दृढव्रतः ॥ धातृप्रसादसंलब्धगायत्रीमहिमा मतिः ॥ १० ॥ गार्गीस्तुतो धर्मपुत्रयागाध्वर्युविचक्षणः। दुष्टराज्ञां शापदाता शिष्टानुग्रहकारकः।११। अनन्तगुणरत्नाढ्यसागरो भवतारकः ॥ स्मृतिमात्रात्पापहर्ता ज्योतिर्ज्यो-

तिर्विदांवरः ॥ १२ ॥ विश्वाचार्यो विष्णुभक्तो विश्व-
प्रियहिते रतः। श्रुतिप्रसिद्धः शान्तात्मा समचित्तः कं-
लाधरः ।१३। आदित्यरूपः आदित्यः सहिष्णुर्मुनिसत्त-
मः॥ सामश्रवादिशिष्यैश्च पूजितांघ्रिर्दयानिधिः॥१४॥
ब्रह्मरातसुतः श्रीमान्पंक्तिपावनपावनः ॥ संशयस्यापि
सर्वस्य निवर्तनपटुः परः ॥ १५॥ आदिवेदहशालांग.
ऋषिजेता त्रयीमयः । होताश्वलमुनिप्राप्तप्रभावः कार्य-
साधकः। शरणागतवैदेहः कृपालुर्लोकपावनः ब्रह्मिष्ठ
प्रवरो दान्तो वेदवेद्यो महामुनिः ।१७॥ वाजी वाज.
सनेयश्च वाजिविप्रकृतादिकृत्। कल्याणदो यज्ञराशि
र्यज्ञात्मा यज्ञवत्सलः ॥ १८॥ यज्ञप्रधानो यज्ञेशप्री
तिसंजननोध्रुवः ॥ कृष्णद्वैपायनाचार्यो ब्रह्मदत्तप्रसा.
धनः ॥ १९॥ शांडिल्यविद्याप्रभृतिविद्यावादेषु निष्ठि-
तः ॥ अज्ञानांधतमःसूर्यो भगवद्वाक्यपूजितः ॥२०॥
त्रयीमयो गवां नेता जपशीलः प्रभाकरः ॥ वैशंपाय.
नशिष्याणां तित्तिरित्वप्रदायकः ॥२१॥ कण्वादिभ्योऽ
यातयामशाखाध्यापयितृत्वभाक्॥ पंक्तिपावनविप्रेभ्यः पर.
मात्मैकबुद्धिमान् ॥ २२ ॥ तेजोराशिः पिशंगाक्षः प-
रिव्राजकराड् मुनिः ॥ नित्यानित्यविभागज्ञः सत्यास-

त्यविभागवित् ॥ एतदष्टोत्तरशतं नाम्नां गुह्यतमं विदुः ॥ याज्ञवल्क्यप्रसादेन ज्ञातोक्तं भवतां मया॥२४॥ जपध्वं मुनिशार्दूलास्तत्त्वज्ञानं दृढं भवेत् ॥ नित्यं प्रातः समुत्थाय स्नात्वा नियतमानसः ॥ २५ ॥ इदं जपति योगीशनाम्नामष्टोत्तरं शतं ॥ स एव मुनिशार्दूला दृढतत्त्वधियां भवेत् ॥२६॥ विद्यार्थी चाप्नुयाद्विद्यां धनार्थी चाप्नुयाद्धनम् ॥ आयुरर्थी च दीर्घायुर्नापमृत्युमवाप्नुयात् ॥ २७ ॥ राज्यार्थी राज्यभुक् भूयात्कन्यार्थी कन्यकां लभेत् ॥ रोगार्तो मुच्यते रोगात् त्रिंशद्वारजपान्नरः ॥ २८ ॥ शतवारं भानुवारे जप्त्वाभीष्टमवाप्नुयात् ॥ इत्युक्तं समुपाश्रुत्य गौतमेन महर्षिणा ॥२९॥ तथैव तेपि जजपुस्तत्पुजं जुहुः क्रमात् ॥ ब्राह्मणान् भोजयामासुः पुरश्चरणकर्मणा ॥ ३० ॥ अष्टोत्तरशतस्यास्य याज्ञवल्क्यस्य धीमतः। इति आदित्यपुराणीययाज्ञवल्क्यनाम्नामष्टोत्तरशतं समाप्तं॥ एवं च शुक्लयजूरूपेण याज्ञवल्क्यनाम्ना मैत्रेयीरमणावतारेण साक्षात् तरणिरेवावतीर्णः धरणावनेकलोकोद्धारायेति सिद्धं । ननु सूर्यस्तावत्कथं शुक्लयजूरूप एवेति चेदुच्यते । त्रय्येव होषा विद्या तप-

तीति श्रुतेः। तत्रापि शुक्लयजूरूपत्वमेव कथमिति चेत् शृणुत ॥ अथ मण्डलब्राह्मणारंभः ॥ ओं यदेतन्मन्डलं तपति तन्महदुक्थं ता ऋचः स ऋचां लोकोथ यदर्चि-र्दीप्यते तन्महाव्रतं तानि सामानि ससाम्नां लोको थय एष एतस्मिन्मंडले पुरुषः सोग्निस्तानि यजूंषि स यजुषां लोकः ॥ १ ॥ इति श्रुतिः ॥ व्याख्यानं तु ॥ यत् एतन्मण्डलं तपति तन्महदुक्थं सर्वं ऋगात्मकं यन्महदुक्थं ता ऋचः ऋग्वेदात्मकत्वेनोपासनीयं ॥ मंडलरूपेण वा ऋग्वेदः ॥ अथानंतरं यदेतन्मंडलं अर्चिरर्चिभिः किरणैः दीप्यते तन्महाव्रतं सर्वसामात्मकं तानि सामानि सामात्मनः ध्यानमर्पिपः स साम्नां लोकः सामवेदरूपेणोपासनीयः॥ अथ अनन्तरं य एष एतस्मिन्मण्डले पुरुषः सोग्निर्यजुर्मन्त्रसाध्यः तानि यजूंषि यजुर्वेदात्मकत्वं मण्डलांतर्गतपुरुषस्य मण्डलांतर्गतपुरुषो यजुषां लोक इति। अत्र यद्यपि यजुर्वेदशब्दस्य यजुर्वेदत्वावच्छिन्नपरत्वं ॥ तथापि तस्य शुक्लकृष्णभेदेनोभयरूपत्वं तत्र यश्च कृष्णयजुर्भागः तस्य सोपाधिकत्वेन स्थूलत्वाच्छबलत्वं ॥ शुक्लयजुर्भागस्य तु निरुपाधिकतया शुद्धब्रह्मरूपत्वं ॥ शुद्धमपा-

प्रविद्धमित्यादिश्रुत्युदित्वात् ॥ एवं चोकसूर्यमण्डलांत-
र्वर्तिमुख्यः पुरुषः शुक्लयजूरूपःशुद्धब्रह्माभिन्न एवेति
सिद्धम् ॥ एवमन्येप्यागमाः प्रचुरतया सर्वस्वरूपस्य
तपतां पतेः ब्रह्मरूपतामापादयन्ति ॥ तथा हि आसावा-
दित्यो ब्रह्म ॥ योसावादित्ये पुरुषः सोसावहम् ॥ सूर्य
आत्मा जगतस्तस्थुषश्च ॥ सूर्याद्वै खल्विमानि भूतानि
जायन्ते ॥ आनन्दमयो ज्ञानमयो विज्ञानमयश्चादि-
त्यः ॥ इत्यादि ॥ एवं च वेदत्रयरूपस्यापि मित्रस्य
आदितः मण्डलमारभ्य कृष्णयजुः पर्यन्तम् स्थूलता-
च्छबलत्वं शुक्लयजुर्भागेपि माध्यन्दिनशाखाया एव
मुख्यतया ब्रह्मरूपत्वम् ॥ कुत इति चेतस्या एव गाय-
त्र्यादि खं ब्रह्मान्तत्वे नाखण्डसच्चिदानन्दब्रह्मानुभव-
रूपत्वात् ॥ एवं च त्रयीतनोरपि भानोर्जगच्चक्षुष्ट्वेनो-
पास्यत्वमखिलकर्मसाक्षितया निरतिशयानन्दरूपत्वे-
नापि ब्रह्मरूपत्वं विलसति ॥ अत एव तैत्तिरीयोपनिषदि
स एको मानुषानन्द इत्युपक्रम्य स य श्चायं पुरुषे य-
श्चासावादित्ये स एकः इत्युपसंहारेण मानुषानन्दादी-
नां सातिशयत्वेन निरतिशयानन्दाभिन्नादित्यानन्दबो-
धनात् आदित्यस्य ब्रह्मरूपता ॥ तथा च तादृशासू-

योपासकतया तदभिन्नानां याज्ञवल्क्यमुनिचरणानां निरवद्यतया सर्ववन्द्यत्वम् निर्विवादमित्यवधेयम् ॥ अत एव तदनुयायिनां माध्यन्दिनशाखाध्यायिनामपि तदार्थिकमेव समर्थितं भवति ॥ अतः सर्वशाखिभिर्योगीश्वरयाज्ञवल्क्यमुनिवर्याः सूर्य इव सन्ध्यान्ते अभिवाद्याः इति सिद्धम् ॥ तत्राभिवादनं नाम स्वगोत्रोच्चारपूर्वकं अमुकशर्मा अहं भो गुरो अमुकशर्मन् त्वामभिवादये इत्युक्त्वा दक्षिणोत्तरपाणिभ्यां गुरुपादस्पर्शपूर्वकं शिरोवनमनम् ॥ अभिवादने पादग्रहणं नास्ति किं तु केवलस्पर्शनं ॥ वन्दने एव पादस्पर्शनम् न तु गोत्रोच्चारः इत्यान्विशेषः ॥ प्रत्यभिवादने तु गुरुणा आयुष्मान् भव सौम्यामुकशर्मन् इत्युक्तिः कार्या ॥ किं च ज्येष्ठं वापि कनिष्ठं वा सन्ध्यान्ते अभिवादयेदित्यादिवचसा सर्वेषां सन्ध्यान्ते गोत्रोच्चारपूर्वकमभिवादनमावश्यकम् ॥ तत्र गोत्रोच्चारस्तु स्वशाखोक्तविधिना कार्यः ॥ तत्र शुक्लयाजुषैः कथं कार्यं इति चेदुच्यते ॥ अमुकगोत्रोत्पन्नः अमुकप्रवरः शुक्लयजुर्वेदवाजसनेयोत्तरभेदसर्वमुख्यमाध्यन्दिनशाखाध्यायी अमुकशर्माहमित्यादि ॥ अस्यार्थः ॥ शुक्लः यजुर्वेदो येषां य-

र्जुर्वेदे शुक्लत्वं तु इमानि शुक्लानि यजूंषि इत्या-
द्यागमावगतमेव ॥ स्मृतिरपि शुक्लम् कृष्णमिति
द्वेधा तद्यजुः समुदीरितं ॥ शुक्लं वाजसनं प्रोक्तं
कृष्णं तत्तैत्तिरीयकमित्यादि ॥ वाजसनेयेत्यत्र वाज-
मन्नम् सनिर्दानमिति ॥ महीधरोक्तया तदस्यास्तीति
वाजसनिः तस्यापत्यं पुमान् वाजसनेयो याज्ञवल्क्य-
स्तेन शाखाविशेषैः पञ्चदशयजुर्भेदैरुपदिष्टाः सर्वे
वाजसनेयिनः कण्वादयः पंचदशसंख्याकाः ॥ तथा च
शुक्लयजुर्वेदाश्च ते वाजसनेयिनश्च तेषामुत्तरभेदः
स एव मुख्यः तदेवाह कात्यायनः ॥ मन्त्रब्राह्मणयोर्वे-
दस्त्रिगुणं यत्र पठ्यते ॥ यजुर्वेदः सविज्ञेयस्त्वन्ये
शाखान्तराः स्मृताः ॥ एतदर्थस्तु लक्षणांशे सुचिरं
विविच्य रुचिरमवोचमेव ॥ माध्यन्दिनीयशाखेत्यत्र
शाखायां माध्यन्दिनीयत्वं तु याज्ञवल्क्यप्रियशिष्यम-
ध्यन्दिनमहर्षिणा याज्ञवल्क्याल्लब्ध· शाखाविशेषो
माध्यन्दिनः माध्यन्दिनसंज्ञको वेदः तं वेदं शिष्यपरं-
परया वर्तमानास्ते माध्यन्दिनाः तेषामयं माध्यन्दिने-
यः अध्येतव्यसंबन्धेन माध्यन्दिनसंज्ञको वेदः ॥ तथा
च शुक्लयजुर्वेदवाजसने योत्तरभेदसर्वमुख्यश्चासौ

माध्यन्दिनीयश्च स एव शाखा ॥ प्रकारान्तरेणापि मुख्यतमस्यास्तथथा यजुर्वेदस्य मूलं हि भेदो माध्य. न्दिनीयकः ॥ सर्वानुक्रमणी तस्याः कात्यायनकृता तु या ॥ इति एवं च तस्याध्यायोध्ययनम् तदस्यास्तीति शुक्लयजुर्वेदवाजसनेयोत्तरभेदसर्वमुख्यमाध्यन्दि. नीयशाखाध्यायि इति गोत्रोच्चारपूर्वकम् अभिवाद्य पश्चादेव गुरुवरैस्तादृशप्रत्यभिवादनं विधेयम् ॥ स एवाशीर्वाद इत्युच्यते ॥ सः कर्मान्ते पूर्वं केन कस्मै कथं विधेय इति चेत्तदुक्तं कण्वकण्ठाभरणे। सर्वत्र क. र्मणामन्ते मन्त्राशिषमनुत्तमां ॥ दद्युर्विप्राः स्वशाखोक्तां आदौ तत्कर्मशाखिनः ॥ स्मृतिरप्येपि सूत्रोदितम् कर्म यथाविधिः स्यात् तथैव कुर्यात्स्वगुरूपदिष्टं॥ वेदोक्तमाशीर्वचनं विद्यादादौ स्वशाखी परतोन्यशाखी इति ॥ एवमन्यत्रापि ॥ स्वशाखीया क्रिया यत्र भवेद्धुत्यादिचोदिता ॥ आशीस्तत्र च पूर्वं स्यात्स्वशाखोक्तमसंशयमिति॥यद्यन्यथा भवेदाशीः कुलनाशो भवेद् ध्रुवमिति ॥ ननु वेदानां क्रमतो जैष्ठ्यं वर्णानां च तथैव चेति वचनेन पूर्वोत्पन्नऋक्शाखिभिरेव प्रथममाशीर्वचनं विधेयमिति यत्तत्तुच्छम् ॥ ऋग्वेदिनां

कृष्णयाजुषापेक्षया प्राथम्यं न तु शुक्लयजुर्वेदापेक्षया॥ तस्य तादृशविभागात्पूर्वमेव द्वैपायनैर्द्विवाक्ये निहितत्वात्॥ अत एव पूर्वं शुक्लयाजुषैरनन्तरं ऋग्वेदिभिस्ततः कृष्णयाजुषैरिति क्रमः॥ अत एव याः याः समुद्रगाः नद्यस्तासु स्नानं तु सम्मुखम् ॥ सर्वेषां शाखिनां कर्म कार्यं वाजसनेयिनेति कात्यायनवचनेन यद्यन्यशाखया कर्म करणीयं स्यात् तर्हि माध्यन्दिनशाखयैव विधेयमिति ॥ तत्र यदि माध्यन्दिनेन स्वशाखाभिमानं विहाय अन्यशाखया कर्मकरणे तस्य शाखरंडत्वादिदोषविशिष्टतया कुलनाशो भवेद् ध्रुवमित्यादिवचनेनानर्थ एव पर्यवस्यति ॥ किं च यजुः शाखाविधाने तु यदि बह्वृचं कर्म चेत् ॥ कृतं चापि हि तत्कर्म पुनः कुर्याद्यथाविधि ॥ इत्यादिवचननिचयैः सर्वत्र प्रकृतशाखयैव कर्मकरणं तच्छाखीयमेवाशीर्वचनं पूर्वं विधेयमिति फलितं ॥ एवं चैहिकामुष्मिकर्मानुकर्कामुकैः सर्वशाखीयद्विजकदम्बकैरत्यंताकृष्टतया प्रकृतमाध्यन्दिनशाखाप्रकाशकयोगीश्वरयाज्ञवल्क्यपादाः निरवद्यतया सर्वदा अभिवाद्या एवेति सिद्धं ॥ एवं चोपक्रममारभ्य एतत्पर्यंतेन एतावता-

प्रबन्धेन प्रकृतशाखाप्रकाशकयाज्ञवल्क्यमुनिवर्यस्य ब्रह्मरूपतापादनेन माध्यन्दिनशाखायाः अपि ब्रह्मरूपता सुस्फीततयैव प्रस्फुरति । यथा चायमर्थः उपक्रमत- प्येतावत्पर्यंतं क्रमेणाभिहितस्तमेवेदानीं संक्षेपेणाभि- धाय उपसंह्रियते ॥ तथाहि प्रथमोपक्रमीयसंगत्यंशे बृहदारण्यब्राह्मणे विजिगीषोः कथामिषेण प्रवृत्तायां ब्रह्मविद्यास्तुतितात्पर्यकायामाख्यायिकायां अनेकाचार्य- शिक्षितस्य पुनर्यागदीक्षादीक्षितस्यात्यन्तं मुमुक्षावतो जनकमहाराजवर्यस्य निजयजनीयानेकद्विजराजसमा- जे ब्रह्मविद्याप्राप्तितात्पर्यतया तद्विशिष्टशिष्टविषय- कैव जिज्ञासा आजनिष्ट ॥ तदर्थमारब्धब्रह्मवित्परीक्ष- णोपायलक्षणस्वर्णाभरणानेकगोगणपणकरणोत्तरक्षणे तत्स्वीकरणासमर्थेषु मुनिवर्येषु यदा याज्ञवल्क्य- स्तं स्वयमुरीचकार तदा समत्सराः सर्वे मुनिव- राश्चुक्रुधुस्तं गोगणं च रुरुधुः पुनरश्वलादयो महर्षिणा वादमाचेरुः तदुदीरितोत्तरैः पराभवं बभू- वुः ॥ एवं गार्गीपर्यंतेषु तथाभूतेषु सत्सु गार्ग्युवाच ॥ यतोहंकारदोषोपि याज्ञवल्क्ये न दृश्यते ॥ धन्योस्य जनकस्तद्वज्जननी च वसुंधरा ॥ राजाहं च तथा

विप्रस्तथाचानेन मंडिता ॥ नानेन सदृशः कश्चिन्ना सीन्नास्ति न भविष्यति ॥ पुमान् जगति विप्रेन्द्र जन्तुरन्यः कथं भवेत् ॥ गार्गीवाक्यपयःपीतं सर्वे स्तैर्ब्राह्मणोत्तमैः ॥ प्रणेमुः शिरसा केचिन्मनसान्ये परे गिरा । इति एवं स्त्रीनिसर्गदुर्बुद्धया गार्ग्या प्रबोधितेषु सत्सु समत्सरः शाकल्यः ब्रह्मविन्मुनिवरायमानेन निजशिरःपातान्तां दुरन्तांदुर्गतिमगात् ॥ तदा जनकमहाराजवर्योपि याज्ञवल्क्यमुनिवर्ये एव ब्रह्म विद्ब्रसरतानिश्चयसंपत्त्या तदुदीरिताभिः अभयं वै जनक प्राप्तोसी.. त्याद्युपनिषद्भिः साक्षाद् ब्रह्मरूपतामापेति । तथा चात्र माध्यन्दिनशाखायाः ब्रह्मविद्यासामानाधिकरण्यरूपा संगतिरभाणि ॥ पुनः प्रकृतशाखाया एवोत्कर्षे इतरासामपकर्षेण शाखिनो वेदत्वावच्छिन्नस्य सर्वशाखावच्छेदेन स्वतः प्रकाशकत्वम् भज्येतेति विरोधाभासनिरासाय द्वितीयतृतीययोः संगतिः ॥ तत्र द्वितीयलक्षणांशे वेदत्वावच्छिन्नस्यापौरुषेयत्वघटितलक्षणोक्त्या अनित्यत्वव्यापकं पौरुषेयत्वं निरस्यापौरुषेयत्वेन पारमार्थिकमेव नित्यत्वप्रतिपादनमकारि ॥ तृतीये प्रामाणांशे तु वेदस्य परतः प्रामाण्यं निरस्य स्वतः प्रामाण्य

मापादितम् ॥ अपि च श्रुतिस्मृतिपुराणानामुपासका-
नां च परस्परं विरोधपरिहारः संक्षेपेणैव प्रदर्शितः ॥
एवं चांशद्वयेन वेदत्वाविच्छिन्नस्यापौरुषेयतया पार-
मार्थिकनित्यत्वेन स्वतः प्रामाण्ये सिद्धे कार्यरूपाया-
मपि व्यष्टौ प्रकृतशाखाविशिष्टशुक्लयजुर्भागस्यैव
व्यापकतया पारमार्थिकनित्यत्वेन ऋगाद्यपेक्षया मुख्य-
त्वमापादयितुं तुरीयांशसङ्गतिः ॥ तत्रादौ शुक्लयजु-
र्वेदस्य ऋगाद्यपेक्षया मुख्यत्वं प्रसाध्य पुनः शुक्लकृष्ण-
यजुर्वेदाख्यायिकयापि तस्यैव मुख्यत्वमाप्ततः संपा-
दितं ॥ तथा कर्मोपासनाज्ञानकाण्डत्रये एवं प्रस्थान-
त्रये तथा महावाक्यचतुष्टयेपि शुक्लयजुर्वेदस्यैव मु-
ख्यत्वं तुरीयांशान्तपर्यंतं स्थिरीकृत्यावधारितम् ॥
तत्रापि प्रथमोपस्थितायाः कण्वशाखायाः मुख्यत्वभ्रमं
निरासयितुं पञ्चमांशसंगतिः ॥ तत्र याज्ञिक्य सूत्र-
कारप्रवृत्तिः सैव मुख्येत्यादिप्रमाणैः कण्वादिचतुर्दश-
शाखापेक्षया प्रकृतशाखाया एव मुख्यत्वमापाद्य पुनः
साक्षात्सूर्योपासकस्य याज्ञवल्क्यस्य तदभेदेन ब्रह्मरू-
पतया सर्ववन्दनीयत्वमुक्त्वा प्रकृतशाखाविशिष्टशुक्ल-
यजुर्वेदस्यैव मुख्यतया ब्रह्मरूपत्वं निश्चितं तदपि

न शबलत्वमपि तु शुद्धत्वमित्यादिश्रुत्यवगतं शुद्ध-
ब्रह्मरूपत्वमित्येतावता प्रबन्धेन स्थिरीकृत्य निर्धारितं॥
एवं च यथासकलश्रुतिशिखामुखीभूतमहावाक्यजन्या-
खण्डार्थावबोधाव्यवहितोत्तरमेवाम्नातनिबर्हणसमका-
लीनज्ञानोदयेन ब्रह्मसाक्षात्कारस्तथोक्तांशप्रकाशकमप-
ञ्चितमाध्यन्दिनशाखाप्रकाशनिबन्धीयपूर्वापरपर्यालो-
चनजन्यज्ञानेन भ्रान्ताज्ञाननिवृत्तिरूपफललाभोऽप्यति
सुलभतयैव विलसतीति फलितम् ॥ तस्मादियं माध्य-
न्दिनशाखाशुद्धब्रह्मरूपैव परमतिजागरूकतया वरी-
वर्ति अत एव तज्जन्यज्ञानदिवाकरोदयः मनसि सरीस-
र्ति चेद् भ्रान्ताज्ञानतिमिरनिकरोऽपि मरीमर्ति तदैव पुमा-
न् दुस्तरमपि संसाराकूपारं तरीतर्ति अन्यथा अज्ञानज-
न्यमहामोहमदिरापानमत्तः सन् दुरन्तसंसारकान्तारे एव
नरीनर्ति इति सिद्धम् ॥ अथात्र माध्यन्दिनशाखायाः सा-
क्षाद्ब्रह्मरूपताविषयकतात्पर्यनिर्णायकलिङ्गषट्कमपि
प्रस्फुटं संघटते ॥ तदुक्तमभियुक्तैः ॥ उपक्रमोपसंहा-
रावभ्यासोऽपूर्वताफलम् ॥ अर्थवादोपपत्ती च लिङ्गं ता-
त्पर्यनिर्णये इति ॥ तथा चास्मिन् निबन्धे उपक्रमोप-
संहारयोरैकरूप्यं कथमिति चेदुच्यते ॥ पूर्वोपक्रमेऽस्य-

वस्तुतस्तुकल्पे भ्रान्ताज्ञाननिवृत्तिपूर्वकप्रकृतशाखायाः निरतिशयमुख्यत्वविषयकनिश्चयसंपत्तिफलक एव वि. चारोपक्रम इत्युक्तम्॥ अत एव तज्जन्यज्ञानदिवाकरोदयो मनसि सरोसति बेद भ्रान्ताज्ञानतिमिरनिकरोपि मरीमति इत्यन्तोपसंहारेप्यैकरूप्यं तु व्यक्तं प्रतीयते॥ तथा अभ्यासो नाम पौनःपुन्यं तदपि प्रसङ्गतः वारंवारमुपपादनेन प्रकृतशाखायां दरीदृश्यते॥ अपूर्वत्वं तु तस्याः समष्टिव्यष्टिव्यापकतयापुनः शुद्धब्रह्मरूपतयाप्यनुभूयते॥ तथा फलमपि भ्रान्ताज्ञाननिवृत्तिरूपं प्रतीयते॥ अर्थवादस्तु कात्यायनसूत्रे विधिर्विधेयस्तर्कश्चेति॥ तत्र सोसावाज्यमभिभ्रयतीति विधेयी वाक्यं विधिः॥ विधेयो मन्त्रः इषेत्वेत्यादिः॥ तर्कस्त्वर्थवादः॥ तदुक्तमभियुक्तैः॥ विरोधे गुणवादः स्यादनुवादोवधारिते॥ भूतार्थवादस्तनादर्थवादस्त्रिधा मतः इति॥ तत्र त्रिविधेप्यर्थवादे गुणवादानुवादयोः आदित्यो यूपः अग्निर्हिमस्य भेषजमित्याकारकयोरर्थवादवाक्ययोः क्रमेण ज्ञातार्थज्ञापकतया बाधितार्थकत्वेन प्रतिपाद्यार्थविषयकतात्पर्यशून्यत्वेपि भूतार्थरूपोत्तमोत्तमत्वबोधकम् त्यादिवचसां अज्ञातज्ञापकत्वेन

स्वार्थ तात्पर्यवत्वे बाधकाभावात् ॥ न ह्यत्र ज्ञातार्थ ज्ञापकत्वेन, बाधितार्थकत्वं स्वार्थ तात्पर्यशून्यत्वे साधकं वर्तते ॥ येन स्वप्रतिपाद्ये सर्वोत्तमत्वरूपे अर्थे श्रीकश्रुत्यादिवचसां तात्पर्यं न स्यादन्यथा वज्रहस्तः पुरंदरः इत्यादिवचनानां हरिनामादिसर्वफलजनकवचनानां च क्रमेण विग्रहत्वे सर्वफलजनकत्वे च तात्पर्यशून्यत्वापत्तेरित्यंतेनार्थवादोपि व्यक्तीभूय भासते ॥ एवं मुख्यामुख्ययोर्मध्ये असति मुख्ये परस्वीकारो युक्त इत्याद्योपि श्रुतिस्मृतीतिहासपुराणादिप्रमाणानुगृहीताः उपपत्तयोपि भूयस्यः संति ॥ तथा चोपक्रमादिलिंगषट्केनापि माध्यंदिनीयशाखायाः ब्रह्मरूपत्वे एव तात्पर्यं एतावत् ग्रन्थस्येति सिद्धम् ॥ अत एव बह्वृन्नारदीये ॥ यजुर्वेदमहाकल्पतरोरेकोत्तरं शतम् ॥ शाखास्तत्र शिखाकारा दश पञ्च च शुक्लगाः ॥ तत्रापि मुख्या विज्ञेया शाखा माध्यन्दिनी यजुः ॥ १ ॥ अत्र मुख्यत्वं निरतिशयब्रह्मरूपत्वमिति बोध्यम् ॥ अत एव सर्वानुक्रमारंभकालीनप्रतिज्ञासूत्रे सूत्रकारैः कात्यायनाचार्यैरभिहितम् ॥ मण्डलं दक्षिणमक्षिहृदयं चाधिष्ठितं येन शुक्लानि यजूंषि भगवान्याज्ञवल्क्यो यतः

प्राप तं यिवस्वन्तं त्रयीमयमर्चिष्मन्तमभिध्याय माध्य-
न्दिनीये वाजसनेयके यजुर्वेदाम्नाये सर्वे सखिले सशु-
क्रिये ऋषिदेवतच्छन्दांस्यनुक्रमिष्यामः ॥ इति अत्र
होलोरभाष्यकाराभिहिताम्नायः श्रुतिमुख्ययोरिति वच-
नादाम्नायशब्दः मुख्यतावाचकः न श्रुतिवाचकस्ते
न वेदाम्नाययोरपरपर्यायत्वे पि न पुनरुक्तिप्रसक्तिः ॥
तया च एकोत्तरभेदात्मकयजुःस्तोमे मुख्यो यः शुक्ल-
यजुःस्तोमस्तस्मिन्वयम् ऋष्यादिकं वक्ष्यामः इत्यन्व-
यः ॥ तत्र यजुर्वेदाम्नायस्य विशेषणपञ्चके पूर्वविशेष
णद्वये पि वाजसनेयके इत्यनेन कृष्णयजुः व्यावृत्तिः ॥
माध्यन्दिनीये इत्यनेन कण्वादिचतुर्दशानां व्यावृत्तिः
रिति बोध्यम् ॥ किं चादित्यपुराणे पि अस्याः प्रथमशा
खायाः सामवेद उरःस्थलं ॥ ऋग्वेदो मध्यदेशस्तु अ
थर्वणमथांघ्रियुक् ॥ छन्दादीन्युपाङ्गानि बृहदारण्यकं
शिर इति ॥ अत्रापि प्रथमशब्दो मुख्यतावाचक एव ॥
न हि केवलं व्यष्टावेव मुख्यत्वम् किं तु समष्टावपि
एक आसीद्यजुर्वेदस्त्यादिवचनात् ॥ किं च यस्यां सूत्रं
भवेत्सा हि मुख्येति परिकीर्तिता इति ॥ अपि च य-
जुर्वेदस्य मूलं हि भेदो माध्यन्दिनीयकः ॥ सर्वानुक्रम

णी तस्याः कात्यायनकृता तु या इति किं च माध्यन्दिनयजुर्वेदः खं ब्रह्मान्त उदाहृतः॥ तात्पूर्वं हि त्रिगुणं नान्यशाखासु मुख्यतेति ॥ अन्यत्रापि ओं कारस्त्रिगुणः प्रोक्तः खं ब्रह्म त्रिगुणं स्मृतम्॥ माध्यन्दिनीयशाखायां यजुर्वेदं पठन्ति हि॥ एवमेवाथर्वणगोपथब्राह्मणादावपि ॥ इदमनूद्योक्तमनुक्तमपि निर्मत्सरैः सुधीभिर्विभावनीयम् ॥ एवं च प्रकृतनिबन्धे पूर्वापरपर्यालोचनया सर्वशाखापेक्षया प्रकृतशाखायाः एव मुख्यत्वं यथा प्रकृतकाले तथा पूर्वकालेपि प्रतीतिरादित्यपुराणे दृश्यते तथा हि ॥ निशाकरोग्निः सूर्यश्च विधाता विश्वदेवताः ॥ त्रिलोचनः शंखपाणिः सत्यब्रह्मपयो मताः॥ १ ॥ मृकण्डव्यासकपिलाः शुक्लः कण्वः पराशरः ॥ नारदोगस्त्यवाल्मीकी इमे माध्यन्दिनाः स्मृता इति॥ ननु यदि प्रकृत माध्यन्दिनशाखायाः एव ब्रह्मरूपतया स्वतः प्रकाशकत्वं तदितरासामप्रकाशकतया वेदस्य सर्वशाखावच्छेदेन स्वतः प्रकाशकत्वं भज्येत ॥ अपि च ब्रह्मयज्ञादिष्वपि वेदचतुष्ट्ये मुख्यतया तस्या एव सर्वैशाखिभिः पठनावश्यकता स्यादिति पुनः के चन शंकामंकुरयंति ॥ ते-

प्येवं समाधेयाः॥ न चयमेतावता प्रबन्धेन प्रकृतशाखा-
याः एव प्रकाशकत्वमितरासामप्रकाशकत्वमिति साध-
यामः ॥ किं तु यथा मुञ्जेषीकाप्रपित्सुना मनुजेन
इषीकांगभूतादवान्तरावरणान्निरतिशयमुख्या इषीके-
वोपादीयते। तद्वन्मयापि यथायोग्यं प्रकाशकानामप्य-
न्यशाखानां मध्यान्निरतिशयप्रकाशिका माध्यन्दिन-
शाखैवोपादाय एतावता प्रबन्धेन निरूपिता इति ॥
ब्रह्मयज्ञादिषु तु स्वपदघटितेन स्वाध्यायोऽध्येतव्य इति
नित्याध्ययनविधिना स्वशाखापूर्वकान्यशाखाध्ययनवि-
धानेन स्वशाखापूर्वकमेवान्यशाखाध्ययनमवगम्यते।
अन्यथा शाखरण्डापत्तिरिति ॥ एवं चोक्तानेकाग-
मादिप्रमाणग्रामानुगृहीतेनैतावता प्रबन्धेन निरभि-
मानिकसाभिमानिकत्वादि प्रसञ्जितपरमार्थव्यवहार-
दृष्टिभ्यामस्यामीशसृष्टौ प्रकृतशाखाविशिष्टे नाविशिष्टे
न चाशिष्टेन स्वेष्टसाधने परमार्थदृष्ट्यैव साक्षाद् ब्र-
ह्माभिन्नप्रकृतशाखाविचारिणः तद्विशिष्टशिष्टादरेण
च सांदृष्टिकमेव स्वाभीष्टं साधनीयमिति विस्पष्ट
प्रार्थये॥ न तु द्वितीयदृष्ट्या शाकल्यादिवद् ब्रह्मवद-
निष्ठानुबंधीष्टसाधनेन कष्टनाशनं दृष्टमिति स्पष्टमे-

च प्रतीयते ॥ तस्मान्निरभिमानिकतया परमार्थदृष्ट्यैव सर्वशिष्टैः स्वाभीष्टं साधितं चेद्दिष्ट्या ॥ तदैव दिष्टवशात्कष्टनाशनं भवतीति गतमत्सरैर्धीवरैर्बुधवरैरेवधेयमिति निरवद्यं तत्त्वम् ॥ अत एव ब्रह्मविदग्रसरयोगीश्वरयाज्ञवल्क्यमुनिवरचरणाः प्रकृतशास्त्राधिकरणास्तरणिकरुणयैवाभिमानानधिरणाः संतः साक्षाद् ब्रह्माकाराकारितांतः करणधुरीणाः बभूवुः ॥ अपि च एतदर्थमेवपरिव्राज्यमप्युरीचक्रुः ॥ अत एव संन्यासिनामादिमइत्येति निरुक्तं तन्नामापि सार्थकतामगात् ॥ किं च साक्षाद् ब्रह्मरूपाणां मुनिवरचरणानां स्मरणमात्रेणाखिलाघवारणम् किमुत वन्दनपूजनादिनेति स्मृतिमात्रात्पापहन्तेत्यभिहितम् ॥ न ह्येतावदेवाहोस्वित् वेदव्यासगुरुत्वमपि कृष्णद्वैपायनाचार्य व्याख्यया विख्यातमिति व्याख्यातपूर्वमत एव चैभवं याज्ञवल्क्यस्य कृष्णद्वैपायनादृते॥ ज्ञातुं समर्थः कोन्यः स्यादिति पौराणडिण्डिमः इत्यादिवचनजालमप्यनुकूलतयैव विलसतीति॥ अपि चोपास्योपासकयोरभेदादेवादित्योपासकतया तद्रूप एष मुनिवर्यः अत आदित्यरूप आदित्य इति नामद्वय-

मपि सार्थकतामगादिति ॥ तस्मादेवंगुणविशेषणविशिष्टो मुनिश्रेष्ठः मित्राभिन्नतया वरिष्ठः सर्वशिष्टैरनिष्टकष्टनाशायाभीष्टलाभाय च यथेष्टं वन्द्य इति स्पष्टतया फलितम् ॥ अत एवारंभे यावती वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ति॥ तस्माद्ब्राह्मणेभ्यो वेदविद्भ्यो दिवेदिवे नमस्कुर्यान्नाश्लीलं कीर्तयेदेता एव देवता प्रीणातीति ॥ एवं ये अर्वाङ् उत वा पुराणे वेदं विद्वान् समभितो वदन्ति ॥ आदित्यमेव ते परिवदन्ति सर्वे अग्निं द्वितीयं तृतीयं च हंसमित्यादयस्तत्सजातीयाः श्रुतयोप्यनुकूला एव विलसन्ति इति सिद्धम्॥ तस्माद् ब्रह्मविदग्रसरयोगीश्वरयाज्ञवल्क्यमुनिवरचरणेभ्यो मन्नतिसहस्रमजस्रं विलसतु ॥ अयं माध्यन्दिनशाखाप्रकाशाख्यो निबन्धः परमकरुणाधिकरणैर्धरणिगीर्वाणधुरीणैरार्यजनैर्धर्मदृशिभिर्बहुभिः सूरिभिर्मल्लिखितभ्रमप्रमादांशो गुणलेशानुरागेण संशोधनीयः इति परोपकृतिकृतसंकल्पान् सुरगुरुकल्पान् पुनरनल्पान् विदुषः सहर्षं प्रार्थये ॥ इतः परमुपरम एव मनो म इति ॥ अस्तु शिवं ॥ श्रीमदन्नपूर्णारमणार्पणमस्तु ॥

वस्तुतस्तु यथा पञ्चीकृतापञ्चीकृतभूतपञ्चकप्रपंचितोयं प्रपञ्चस्तद्वदंशपंचकप्रपंचितोयं माध्यन्दिनशाखाप्रकाशाभिधो निबन्धः पुनर्द्वैतमतवंचकोप्यद्वैतमतरंजकः पञ्चावयवविराजितः साक्षादागमराज इव विराजते ॥ अथ वा लिंगादिपंचकप्रमाणगणप्रबलीभूतश्रुतिरिवाविर्भवति ॥ अपि च प्रतिज्ञादिपंचावयवसमुदायलब्धन्यायवदहोस्वित् पंचदशाक्षरीसहितः साक्षात्पञ्चाक्षरः पञ्चवदनः सदाशिव इव उपासकार्यजनानामहर्निशं शिवंकरो भूयो भूयादिति अस्तु शिवं ॥ अत्र यत्सौष्ठवं सर्वं गुरोरेव हि तन्न मे ॥ अस्ति चेद्दौष्ठवं किं चित् तन्ममैव गुरोर्न हि ॥ १ ॥ इति श्रीमद्रामशास्त्रिचरणरजोविरजीभूतजयरामात्मजव्यवहारोपनामककाशीवासिजगन्नाथसूरिविरचितोयमंशपंचकविराजितो माध्यन्दिनशाखाप्रकाशाख्यो निबन्धः॥अप्रतिबन्धं चरमवर्णध्वंसतामगादिति॥श्रीमदन्नपूर्णारमणपरब्रह्मार्पणमस्तु ॥ श्रीरस्तु शुभम् ॥ कश्यपस्य कुले जन्म जगन्नाथाभिधा शुभा ॥ व्यवहारेत्युपाख्या च गोत्रं काश्यपसंज्ञितम् ॥ सूत्रं कात्यायनं पुत्रो विश्वनाथाभिधः शुभः ॥तेनायं रुचिरो ग्रन्थो

रचितो गुर्वनुग्रहात् ॥ अत एवार्यान्प्रार्थये ॥ मात्सर्य-
मुत्सार्य विचार्य कार्यमार्याः समयोदमुदाहरंतु ॥ आ.
चार्यवर्यः किल यस्य सूर्यः स्मार्यः स एवापि च व-
न्हिवीर्यः ॥ १ ॥ माध्यन्दिनशाखायाः प्रकाशसंज्ञोय'
मभिनवः सूर्यः ॥ भ्रान्ताज्ञानध्वांतध्वंसनचतुरः परं
जयति ॥ १ ॥ चिंतामणिगणगण्योप्यगणितपुण्योति-
पूर्णसर्वार्थः ॥ दिनमणिरिव निजकिरणैर्धरणौ सरणीः
प्रकाशयति रमणीः ॥ २ ॥ पारावारांबरवसुकलाधी'
शवर्षे जयाख्ये कर्कस्थार्के नभसि धवले पक्षताव-
ब्जयस्त्रे ॥ वाराणस्यां हरिपदभवायास्तटे पूर्वपद्या-
ख्यातारव्योगाद् गुरुकरुणया पूर्णतांग्रन्थ एषः ॥३॥
दोषेण लेखकस्याथ मुद्रणस्य विपर्ययः ॥ तच्छुद्धिपत्रं
रचितं तथापि स्खलितं क्वचित् ॥ १ ॥ विचार्य सूरयः
सम्कृय गुणदृष्ट्या मुहुर्मुहुः ॥ दोषदृष्टिं विहायेे-
मं पश्यंतु कृपया मयि २ तत्तत्पत्रस्थपंक्तौ यदशुद्धं
दृश्यते,क्वचित्॥तच्छुद्धपत्रिकां दृष्ट्वा शोधनीयं सुबुद्धिभिः॥

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ३ | २ | यां:ध | याध |
| ३ | २ | पां:भू | पाभ् |
| ४ | १ | पायि | यायि |
| ५ | ७ | पृदिव | पश्वी |
| ६ | ६ | नैव | यैव |
| ६ | १७ | ष्टानां | ष्ठाना |
| ६ | १८ | च्छैष्ठे | च्छैष्ट्रो |
| ८ | ६ | यया | यद्या |
| ९ | १० | सी | सीऽ |
| ११ | १० | मह | मम |
| ११ | १५ | बृह्मौ | बृह्मा |
| ११ | १६ | ओवे | ओणे |
| ११ | १८ | गार्गी | गार्गि |
| ११ | १८ | वंतो | वंतौ |
| १२ | ५ | गार्गी | गार्गि |
| १२ | १३ | गार्गी | गार्गि |
| १३ | १० | मुथ्या | मुथ्या. |
| १३ | १५ | ग्यंह | गवह |
| १३ | १५ | दृष्टु | दृष्ट् |
| १३ | १५ | ओत | ओन |
| १३ | १७ | सार्हत | लोहित |
| १३ | १८ | व्योधर्व | व्यधर्व |
| १४ | १ | छौदं | छौदं |
| १४ | १७ | छात्याक् | छात्वाका |
| १४ | १५ | षसि | प्यसि |
| १४ | १५ | तैवय | तैवय |
| १४ | १६ | कस्य | काह्य |
| १५ | ७ | रीतो | रीतं |
| १६ | ८ | विद्या | विद्यः |
| १६ | १४ | तर | तरं |
| १७ | १ | खामी | खामि |
| १७ | १६ | भाग्नि | भाग्नि |
| १७ | १८ | यमा | ममा |
| १८ | २ | हव् | दव् |
| १८ | ६ | मुरी | मूरी |
| १८ | १५ | युक्ता | स्युक्ता |
| १९ | २ | षति | सती |
| १९ | ५ | बृलधि | बृलवि |
| १९ | १६ | सोरिब | रोरिब |
| १९ | १७ | द्विय | दीप |
| १९ | १९ | पुब | पुबः |
| २० | १ | धाह्त | वाह्त |
| २० | ५ | वारो | वारं |
| २० | ९ | भाग्नि | भग्नि |
| २१ | १२ | वियक्री | वियक्री |
| २१ | १८ | साना | सामाना |
| २४ | १ | दत | दतो |
| २४ | १४ | वधि | बाधि |
| २५ | १६ | हृदय | हृदयं |

| पृ० | पं० | अ० | शु० |
|---|---|---|---|
| ४९ | ४ | युकाका | युका |
| ५१ | ४ | नेमिष | ममिष |
| | ५ | यशु | याशु |
| | ८ | क्षता | क्षर्ता |
| | ९ | मूयु: | मूयुं |
| | १४ | र्गौषा | गौषा |
| ५२ | ६ | षयनि | यनी |
| | ६ | नारायणा | रायणा |
| | ११ | दोष | षेदोष |
| | १६ | ययात्या | यथाप्ता |
| | १७ | यणा | यणीप्रति |
| | १७ | प्रति | नि |
| ५३ | ३ | न्तुषु | मुविन्तु |
| | ५ | सुषा | सुयाय |
| ५५ | ४ | मला | फल |
| | ८ | गव | गणव |
| | १९ | क्षिप्तितप | भिक्षितप् |
| ५६ | १४ | जावको | जापको |
| ५७ | २ | जयां | जयी |
| | ३ | वद्यायथञा | याद्यावथा |
| | १८ | प्रक् | प्रकृत |
| ५८ | १९ | कार्यो | कार्या |
| | ७ | पेणा | पेण |
| | १२ | सर्षे | सर्के |
| ५९ | १६ | ड्या | ड्यी |
| ६० | ४ | कोटि | कृत्यादि |
| ६० | ५ | पस्त | पत |
| ६० | ९ | दृष्टारो | दृष्टार |
| ६० | १२ | त्यांति | त्यति |
| ६१ | ५ | हयो | हय |
| | १२ | पाठ | पाठः |
| | १७ | त्नामा | त्नामा |
| ६२ | ५ | ग्रास | ग्रस्त |
| | १६ | नांतु | नंतु |
| ६३ | ५ | त्नात | त्न |
| | ९ | भिनि | भिमानि |
| ६४ | ७ | भुक्तग | भुक्तया |
| | १० | वादनं | वादि |
| | १२ | बंकुसो | बयंसोम |
| | १३ | ग्रन्त्रै | ग्रमंत्रै |
| | १५ | वीर्यभि | वीभि |
| ६५ | ५ | नश्चिकाम | नाच्कीकामः |
| | १० | मंत्राः | मंत्रान् |
| | | ह्विकाः | ह्विकान् |
| | | मंत्रा | मंत्रां |
| ६६ | १० | त्युक् | त्यवुक् |
| | १४ | रिभक्ताः | विभक्ताः |
| ६७ | २ | स्वेमा | स्वमा |
| | ३ | यास्व | यास्वे |
| | १२ | धाय | धायय |
| ६८ | ९ | मवा | मेवा |
| ७० | १५ | स्यर्के | स्यचे |
| ७१ | ७ | ष्ठेन | ष्ठाने |
| ७१ | ७१ | यातसोम | तथो |
| ७२ | १३ | नाभिन् | माभीन् |
| | ९ | यद्दि | मद्दि |
| | १५ | क्षर्म | क्षाकर्म |
| ७३ | १८ | काष | मप |

| पृ० | पं० | अ० | शु० |
| --- | --- | --- | --- |
| ७४ | १४ | तुलं | तुल |
| ७६ | ८ | शित्य | सत्य |
| ७७ | १२ | तस्य | तत्र |
| ८० | ५ | भित्वै | भिन्नेत्वै |
| | ११ | स्पृश्य | स्पृश्या |
| ८१ | १७ | यायो | यायः |
| ८४ | २ | छवि | छवा |
| | १२ | नात्व | नात्वा |
| | १८ | सपि | सापि |
| ८५ | ४ | वतबति | व्यतबनि |
| | ५ | पुन | पुनिव |
| | ५ | यान | यावत |
| | | पीतात | पीततत |
| | | नतम् | नवरम् |
| ८६ | ६ | मरक्षा | तरक्षा |
| ८८ | ६ | चेतु | चसु |
| | ८ | निर्णे | चिरोगणे |
| | | रवौ | रवे |
| ८९ | १ | समानसमान | समान |
| | २ | मे | मेव |
| | ६ | सत | सुत |
| | २ | दन्त | दत्तं |
| | १० | यशाधि | यथाव्याधि |
| | १० | यने | यजने |
| | ११ | गोन | गोगण |
| | १२ | ट्टव | द्विवं |
| | | यज्ञुर | यजुरा |
| | १५ | यस्ता | यःफायस्त |
| ८८ | २ | भौ | भौतु |
| | १२ | चित्त | चित्र |
| | १८ | वक्ष | यक्ष |
| | १८ | रास्ता | रस्ता |
| ८९ | १० | पेनन | पेन |
| | १२ | चिन्ह | चिन्ह |
| | १७ | यन् | यम् |
| | १८ | मात्र | मातु |
| ९० | १० | छजलीं | छजलिं |
| | १० | थिमव | धीमव |
| ९१ | ६ | प्युक्त | भ्युक्त |
| | ८ | वस | विस |
| | १० | तोःसु | तोसु |
| | १६ | हयो | हयि |
| ९२ | ४ | सौयानि | सैयानो |
| | १० | तोक्ष | तांक्ष |
| ९३ | १७ | योदी | योदीर्घसंधयात्वातदं |
| | १७ | यरच | यग्रदव |
| ९४ | ११ | निसि | निवि |
| ९५ | १० | नति | नती |
| | १९ | रीरं | रीरारं |
| | १८ | पास् | पाट् |
| ९६ | १६ | समा:. | समा: |
| | १७ | स्येति | स्याद्भवि |
| | १८ | नेत | नेत |
| | १८ | पतमे | परमे |
| ९७ | ७ | तुरत्य | तुर्ये |
| | ८ | भिधा | भिरा |
| ९८ | ७ | देव | रेव |